वः । तनुते । ततान । तेने । तनु । अतनीत् । आतानीत् ॥ **तनादिभ्यस्तथासो**
२ । ४ । ७९ ॥ तनादेः सिचो वा लुक् स्यात्तथासोः । थासा साहचर्यादेकवचनं
शब्दो गृह्यते । तेनेह न । यूयमतनिष्ट । अतानिष्ट । अनुदात्तोपदेशेत्यनुनासिकलोपः
ति । अतत । अतनिष्ट । अतथाः । अतनिष्ठाः ॥ १ ॥ षणु दाने ॥ सनोति । सनुते
ये विभाषा । सायात् । सन्यात् । जनसनेत्यात्वम् । असात । असनिष्ट । असाथाः
असनिष्ठाः ॥ २ ॥ क्षणु हिंसायाम् ॥ क्षणोति । क्षणुते । ह्म्यन्तेति न वृद्धिः । अक्ष
णीत् । अक्षत । अक्षणिष्ट । अक्षथाः । अक्षणिष्ठाः ॥ ३ ॥ क्षिणु च
प्रत्ययनिमित्तो लघूपधगुणः । संज्ञापूर्वको विधिरनित्यइति न भवतीत्यात्रेयादयः
भवत्येवेत्यन्ये । क्षिणोति । क्षेणोति । क्षेणितासि । क्षेणितासे । अक्षेणीत् । अक्षित
अक्षेणिष्ट ॥ ४ ॥ ऋणु गतौ ॥ ऋणोति ॥ अर्णोति । अर्णुतः । अर्णुवन्ति । आनृणे
अर्णितासि । आर्णीत् । आर्त । आर्णिष्ट । आर्थाः । आर्णिष्ठाः ॥ ५ ॥ तृणु अदने ॥ तृ
णोति । तर्णोति । तृणुते । तर्णुते ॥ ६ ॥ घृणु दीप्तौ ॥ जघर्ण । जघृणे ॥ ७ ॥ अ
ह्यनुदात्तेतौ ॥ वनु याचने ॥ वनुते । ववने । चान्द्रमते परस्मैपदी । वनोति । ववा
न ॥ १ ॥ मनु अवबोधने ॥ मनुते । मेने ॥ २ ॥ डुकृञ् करणे ॥ करोति । अरु
कत्सार्वधातुके । कुरुतः । यण् । न भकुर्छुरामिति न दीर्घः । कुर्वन्ति ॥ **नित्यं क**
रोतेः । ६ । ४ । १०८ ॥ प्रत्ययोकारस्य नित्यं लोपः स्याद्वमोः परयोः । कुर्वः । कु
र्मः । चकर्थ । चकृव । कर्ता । करिष्यति ॥ ये च । ६ । ४ । १०९ ॥ कृञ उलो
पः स्यादादौ प्रत्यये परे । कुर्यात् । आशिषि । क्रियात् । कृषीष्ट । अकार्षीत् । तना
दिभ्य इति लुकोऽभावे ह्रस्वादङ्गादिति सिचो लोपः । अकृत । अकृथाः ॥ **संपरिभ्यां**
**करोतौ भूषणे** । ६ । १ । १३७ ॥ **समवाये च** । ६ । १ । १३८ ॥ संपरि
पूर्वस्य करोतेः सुट् स्याद्भूषणे संघाते चार्थे । संस्करोति । अलंकरोतीत्यर्थः । संस्कुर्वन्ति ।
संघीभवन्तीत्यर्थः । संपूर्वस्य क्वचिदभूषणेऽपि सुट् । संस्कृतंभक्षा इति ज्ञापकात् । प
रिनिविभ्य इति षः । परिष्करोति ॥ सिवादीनां वा । पर्यष्कार्षीत् । पर्यस्कार्षीत् ॥
**उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च** । ६ । १ । १३९ ॥ उपात्कृञः सुट्
स्यादेष्वर्थेषु । चात्प्रागुक्तयोरर्थयोः । प्रतियत्नो गुणाधानम् । विकृतमेव वैकृतं विकारः ।
वाक्याध्याहारः आकाङ्क्षितैकदेशपूरणम् । उपस्कृता कन्या । अलंकृतेत्यर्थः । उप
स्कृता ब्राह्मणाः । समुदिता इत्यर्थः । एधोदकस्योपस्कुरुते । गुणाधानं करोतीत्यर्थः ।
उपस्कृतं भुङ्क्ते । विकृतमित्यर्थः । उपस्कृतं ब्रूते । वाक्याध्याहारेण ब्रूतइत्यर्थः ॥
**सुट्कात्पूर्वः** । ६ । १ । १३५ ॥ अडभ्यासव्यवायेऽपीत्युक्तम् । संचस्कार । कात्पूर्व
इत्यादि भाष्ये प्रत्याख्यानम् । तथा हि पूर्वं धातुरुपसर्गेण युज्यते । अन्तरङ्गत्वात्सुट् ।
संयोगादित्वम् । एवं च ऋतश्च संयोगादेर्गुणः । संचस्करतुः ॥ **कृसभृ** इति सूत्रे करो

ज्ञाणेति सूत्रे च कृष्णोऽसृष्ट इति वक्तव्यम् * ॥ तेन मस्तूत्तामकर्णैः । मंथन्नानि।
पाकारिव । गुणोर्तीति सूत्रे निर्गं छन्दसीति सूत्राभिन्नमित्यनुवर्तते । नित्यं पः संयो-
गादिमत्संस्त्वर्णातुडि गुणो न । संस्किरताम् । स्त्रस्त संयोगादेरिति निर्दिष्टवान्।
ऋकारान्तरेशादि सूत्रादुपदेशाद्गणुवर्तं प्रत्येके गः संयोगादिरिति व्याख्यानात्।
संस्कृतीष्ट । ससस्कर । सामस्कृतानाम् ॥ ३ ॥

॥ इति तनादयः ॥

डुक्रीञ् द्रव्यविनिमये ॥ क्र्यादिभ्यः श्ना । ३ । १ । ८१ ॥ क्रीणाति ॥ ई
हल्यघोः । क्रीणीतः । ईत्वात्पूर्वं ईरत्वादेश: परत्वाभिवात्वादन्तरङ्गत्वाच्च । एवं इ-
श्नाभावः । ततः श्नाभ्यस्तयोरित्याल्लोपः । क्रीणन्ति । क्रीणासि । क्रीणाते । क्रीणते ।
चिक्राय । चिक्रियतुः । चिक्रयिथ । चिक्रेथ । चिक्रियिव । चिक्रियिषे । क्रेता ।
क्रेष्यति । क्रीयात् । क्रेषीष्ट । अक्रैषीत् । अक्रेष्ट ॥ १ ॥ प्रीञ् तर्पणे कान्तौ च ।
कान्तिः कामना । प्रीणाति । प्रीणीते ॥ २ ॥ श्रीञ् पाके ॥ ३ ॥ मीञ् हिंसायाम् ॥
हिनुमीना । प्रमीणाति । प्रमीणीतः । मीनातिमिनोतिदीङां ल्यपि चेत्यात्वम् । ममौ । मिम्य-
तुः । ममिथ । ममाथ । मिम्ये । माता । मास्यति । मीयात् । मासीष्ट । अमासीत्।
अमासिष्टाम् । अमास्त ॥ ४ ॥ षिञ् बन्धने । सिनाति । सिनीते । सिषाय । सिष्ये ।
सेता ॥ ५ ॥ स्कुञ् आप्रवणे ॥ स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च ।
३ । १ । ८२ ॥ चात् श्ना । स्कुनोति । स्कुनुते । स्कुनाति । स्कुनीते । चुस्काव ।
चुस्कुवे । स्कोता । अस्कौषीत् । अस्कोष्ट ॥ ६ ॥ स्तम्भ्वादयश्चत्वारः सौत्राः । सर्वे
रोधनार्था इत्येके । माधवस्तु प्रथमतृतीयौ स्तम्भार्थौ द्वितीयो निष्कोषणार्थश्चतुर्थो
धारणार्थ इत्याह । सर्वे परस्मैपदिनः । नलोपः । विष्टभ्नोति । विष्टभ्नाति । अवष्टभ्नो-
ति । अवष्टभ्नाति । अवतष्टम्भ । जृस्तम्भित्यक्त । व्यष्टभत् । व्यष्टम्भीत् ।
स्तुभ्नोति । स्तुभ्नाति ॥ वेः स्कभ्नातेर्नित्यम् । ८ । ३ । ७७ ॥ वेः परस्य स्क-
भ्नातेः सस्य षः स्यात् । विस्कभ्नोति । विष्कभ्नाति । स्कुभ्नोति । स्कुभ्नाति ॥ हलः
श्नः शानज्झौ । ३ । १ । ८३ ॥ हलः परस्य श्नः शानजादेशः स्याद्धौ परे ।
स्तभान । स्तुभान । स्कभान । स्कुभान । पक्षे स्तभुहीत्यादि ॥ युञ् बन्धने ॥ युनाति ।
युनीते । योता ॥७॥ क्नूञ् शब्दे ॥ क्नूनाति । क्नूनीते । क्नविता ॥८॥ द्रूञ् हिंसायाम् ।
द्रूणाति । द्रूणीते ॥९॥ पूञ् पवने ॥ प्वादीनां ह्रस्वः ।७।३।८०॥ शिति परे ॥
पुनाति । पुनीते । पविता ॥१०॥ लूञ् छेदने ॥ लुनाति लुनीते ॥११॥ स्तॄञ् आच्छाद-
ने ॥ स्तृणाति । स्तृणीते । तस्तार । तस्तरतुः । स्तरिता । स्तरीता । स्तृणीयात् । स्तृणीत ।
आशिषि । स्तीर्यात् । लिङ्सिचोरिति वेट् ॥ न लिङि ।७।२।३९॥ वृत इटो लिङि
दीर्घो न स्यात् । स्तरिषीष्ट । उश्चेति कित्त्वम् । स्तीर्षीष्ट । सिचि च परस्मैपदेष्विति न

दीर्घः । अस्तारीत् । अस्तारिष्टाम् । अस्तारिष्ट । अस्तीर्ष्ट ॥ १२ ॥ कॄञ् हिंसायाम् । कृणाति । कृणीते । चकार । चकरे ॥ १३ ॥ वृञ् वरणे ॥ वृणाति । वृणीते । ववार । ववरे । वरिता । वरीता । आशिषि उदोष्ठ्यपूर्वस्य । वूर्यात् । वरिषीष्ट । वूर्षीष्ट । अवारीत् । अवारिष्टाम् । अवरिष्ट । अवरीष्ट । अवूर्ष्ट ॥ १४ ॥ धूञ् कम्पने ॥ धुनाति । धुनीते । दुधविथ । दुधोथ । दुधुविव । धोता । धविता । स्तुसुधूञ्भ्य इतीट् । अधावीत् । अधविष्ट । अधोष्ट ॥ १५ ॥ अथ बध्नात्यन्ताः परस्मैपदिनः ॥ शॄ हिंसायाम् ॥ शॄदॄपां ह्रस्वो वेति ह्रस्वपक्षे यण् । अन्यदा ऋच्छत्यॄतामिति गुणः । शश्रतुः । शशरतुः । श्र्युकः कितीति निषेधस्य क्रादिनियमेन बाधः । शशरिथ । शश्रिव । शरिता । शरीता । शृणीहि । शीर्यात् । अशारिष्टाम् ॥ १ ॥ पॄ पालनपूरणयोः ॥ पप्रतुः । पपरतुः । आशिषि । पूर्यात् ॥ २ ॥ वॄ वरणे ॥ भरण इत्येके ॥ ३ ॥ भॄ भर्त्सने ॥ भरणेऽप्येके ॥ ४ ॥ मॄ हिंसायाम् ॥ मृणाति । ममार ॥ ५ ॥ दॄ विदारणे ॥ दद्रतुः । ददरतुः ॥ ६ ॥ जॄ वयोहानौ ॥ ७ ॥ झॄ इत्येके ॥ ८ ॥ धॄ इत्यन्ये ॥ ९ ॥ नॄ नये ॥ १० ॥ कॄ हिंसायाम् ॥ ११ ॥ ऋ गतौ । ऋणाति । अरांचकार । अरिता । आर्णीत् । आर्णीताम् । ईर्यात् । आरीत् । आरिष्टाम् ॥ १२ ॥ गॄ शब्दे ॥ १३ ॥ ज्या वयोहानौ ॥ ग्रहिज्या ॥ हलः । ६ । ४ । २ ॥ अङ्गावयवाद्धलः परं यत्संप्रसारणं तदन्ताङ्गस्य दीर्घः स्यात् । इति दीर्घे कृते । प्वादीनां ह्रस्वः । जिनाति । जिज्यौ । जिज्यतुः ॥ १४ ॥ री गतिरेषणयोः ॥ रेषणं वृकशब्दः ॥ १५ ॥ ली श्लेषणे ॥ विभाषालीयतेरित्येज्विषये आत्वं वा । ललौ । लिलाय । लाता । लेता ॥ १६ ॥ व्ली वरणे ॥ व्लिनाति ॥ १७ ॥ प्ली गतौ ॥ १८ ॥ वॄ ॥ ल्वादयो वृत्ताः । प्वादयोऽपीत्येके ॥ व्री वरणे ॥ १९ ॥ भ्री भये ॥ २० ॥ क्षर इत्येके ॥ २१ ॥ क्षीष् हिंसायाम् ॥ एषां प्वादीनां ह्रस्वः । केचित्त्वेते तु न ॥ २२ ॥ ज्ञा अवबोधने ॥ ज्ञाजनोर्जा । जानाति । दीर्घनिर्देशसामर्थ्यान्न ह्रस्वः ॥ २३ ॥ बन्ध बन्धने ॥ बध्नाति । बबन्ध । बन्धा । बन्धारौ । भन्त्स्यति । बधान । अभान्त्सीत् । पूर्वत्रासिद्धमिति भष्भावात्पूर्वं झलो झलीति सिज्लोपः । प्रत्ययलक्षणेन सादिप्रत्ययमाश्रित्य भष्भावो न । प्रत्ययलक्षणं प्रति सिज्लोपस्यासिद्धत्वात् । अबान्धाम् । अभान्त्सुः ॥ २४ ॥ वृङ् संभक्तौ । वृणीते । वव्रे । ववृषे । ववृढ्वे । वरिता । वरीता । अवरिष्ट । अवरीष्ट । अवृत ॥ १ ॥ श्रन्थ विमोचनप्रतिहर्षयोः ॥ इतः परस्मैपदिनः ॥ श्रथ्नाति । श्रन्थिग्रन्थिदम्भिस्वञ्जीनामिति कित्त्वपक्षे एत्वाभ्यासलोपावप्यत्र शश्रन्थौ । इति हरदत्तादयः । श्रेथतुः श्रेथुः । इदं कित्त्वं लिमात्रविषयमिति सुधाकरमते । अस्मिन्पक्षे णलि । शश्राथ । उत्तमे तु शश्रथ शश्रन्थेति माधवः । मथ मुन्थ मृन्थन् इ ॥ २ ॥ मन्थ विलोडने ॥ ३ ॥ ग्रन्थ सन्दर्भे ॥ अर्थभेदात्पुनः पाठः । ग्रन्थं गुम्फ ॥ ४ ॥ कुन्थ संश्लेषणे ॥ संक्लेशे इत्येके । कुथ्नाति । चुकुन्थ ॥ ५ ॥ कुथेनि

स्मृताम् ॥ चिन्तयति । अचिचिन्तत् । चिन्तेति पठितव्ये इदित्करणं णिचः
त्वे लिङ्गम् । तेन चिन्त्यात् । चिन्त्यते इत्यादौ नलोपो न । चिन्तति । चिन्तेत् ।
शापकं सामान्यापेक्षमित्येके । अत एकहलित्यत्र वृत्तिकृता जगाण । जगणगु-
क्तत्वात् ॥ विशेषापेक्षमित्यपरे । अत एवाधृषाद्वेत्यस्य न वैयर्थ्यम् ॥ २ ॥ यत्रि
। यन्त्रयति । यन्त्रेति पठितुं शक्यम् । यत्तु इदित्करणाद्यन्त्रतीति माधवेनोक्त-
म् । एवं कुद्रितन्त्रिमन्त्रिषु ॥ ३ ॥ स्फुडि परिहासे ॥ स्फुण्डयति । इदित्कर-
। स्फुण्डति ॥ स्फुटीति पाठान्तरम् । स्फुण्टयति ॥ ५ ॥ लक्ष दर्शनाङ्कन-
कुद्रि अनृतभाषणे ॥ कुन्द्रयति ॥ ६ ॥ लड उपसेवायाम् ॥ लाडयति ॥ ७ ॥
हने ॥ मिन्दयति मिन्दति ॥ ८ ॥ ओलडि उत्क्षेपणे ॥ ओलण्डयति । ओ-
॥ ९ ॥ ओकार इत्येके । लण्डयति । लण्डति ॥ १० ॥ उकारादिरयमि-
उलण्डयति ॥ ११ ॥ जल अपवारणे ॥ १२ ॥ लज इत्येके ॥ १३ ॥ पीड अ-
। पीडयति ॥ **भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्** ।
। ३ ॥ एषामुपधाया ह्रस्वो वा स्याच्चङ्परे णौ । अपीपिडत् । अपिपीडत् ॥
ट अवस्यन्दने । अवस्यन्दनं नाट्यम् ॥ १५ ॥ श्रथ प्रयत्ने । प्रस्थान इत्येके
। पथ संयमने ॥ पाथयति । पन्थेति चान्द्रः ॥ १७ ॥ पॄ पूरणे । पारयति ।
गं णिचः पाक्षिकत्वे लिङ्गं तद्धि सेट्त्वाय । एवं पृणातिपिपर्तिभ्यां परतेरपा-
पि परति परतइत्यादिसिद्धिः फलम् ॥ १८ ॥ ऊर्ज बलप्राणनयोः ॥ १९ ॥
हे ॥ २० ॥ वर्ण चूर्ण प्रेरणे ॥ वर्ण वर्णन इत्येके ॥ २२ ॥ प्रथ प्रख्याने ॥
मान्ये मितोऽहेताविति वक्ष्यमाणत्वान्नास्य मित्त्वम् ॥ **अत्स्मृदृत्वरप्रथ-**
**स्तॄाम्** । ७ । ४ । ९५ ॥ एषामभ्यासस्य अकारोऽन्तादेशः स्याच्चङ्परे णौ ॥
। अपप्रथत् ॥ २३ ॥ पृथ प्रक्षेपे ॥ **उर्ऋत्** । ७ । ४ । ७ ॥ उपधाया
ने ऋत्स्याद्वा चङ्परे णौ । इररारामपवादः । अपीपृथत् । अपपर्थत् ॥ २४ ॥
पाथयति ॥२५॥ षम्ब सम्ब सम्बन्धने ॥ सम्बयति । अससम्बत् ॥२६॥ शम्ब
म्बत् ॥ २७ ॥ साम्ब इत्येके ॥ २८ ॥ भक्ष अदने ॥ २९ ॥ कुट्ट छेदनभर्त्सन-
इत्येके । कुट्टयति ॥ ३० ॥ पुट्ट चुट्ट अल्पीभावे ॥ ३२ ॥ अट्ट षुट्ट अनादरे ॥
यं दोपधः । ष्टुत्वस्यासिद्धत्वान्नन्द्रा इति निषेधः । आट्टिटत् ॥ ३४ ॥
लुण्टयति । लुण्टतीति लुठि स्तेये इति भौवादिकस्य ॥ ३५ ॥ शठ श्वठ
ठः । श्वठि इत्येके ॥ ३८ ॥ तुजि पिजि हिंसाबलादाननिकेतनेषु । तु-
ञ्जयति । इदित्करणात्तुञ्जति । पिञ्जति । तुजपिजेति केचित् ॥ लजि लुजि
॥ पिस गतौ । पेसयति । पेसतीति तु शपि गतम् ॥ ४५ ॥ षान्त्व साम—
. ॥ श्वल्क वल्क परिभाषणे ॥ ४८ ॥ .

॥ ५० ॥ ष्मिट अनादरे ॥ अघोरदेशलास पः । असिष्मिटत् ॥ ५१ ॥ ष्मिङ्
नादर इत्येके । स्मियतस्तामन्येऽघरितार्थत्वाग्निमन्तासङ् । स्मायनेः ॥ ५२ ॥ श्लि
न श्लेषणे ॥ ५३ ॥ पथि गतौ ॥ पन्थयति । पन्थति ॥ ५४ ॥ पिच्छ कुट्टने ॥ ५५
छदि संवरणे ॥ छन्दयति । छन्दति ॥ ५६ ॥ श्रण दाने ॥ प्रायेणायं विपूर्वः ।
श्राणयति ॥ ५७ ॥ तड आघाते ॥ ताडयति ॥ ५८ ॥ खड खडि कडि भेदने
खाडयति । खण्डयति । कण्डयति ॥ ६१ ॥ कुडि रक्षणे ॥ ६२ ॥ गुडि वेष्टने
रक्षण इत्येके ॥ कुठि इत्यन्ये ॥ अवकुण्ठयति । अवकुण्ठति ॥ गुठि इत्यपरे ॥ ६५
लुडि खण्डने ॥ ६६ ॥ पटि विभाजने ॥ वडि इत्येके ॥ ६८ ॥ मडि भूषायां
च ॥ ६९ ॥ भडि कल्याणे ॥ ७० ॥ छर्द वमने ॥ ७१ ॥ पुस्त बुस्त आदरानादर
योः ॥ ७३ ॥ चुद संचोदने ॥ ७४ ॥ नक्क धक्क नाशने ॥ णोपदेशलक्षणे
ऽयम् । प्रनक्कयति ॥ ७६ ॥ चक्क चुक्क व्यथने ॥ ७८ ॥ क्षल शौचकर्मणि ॥ ७९
तल प्रतिष्ठायाम् ॥ ८० ॥ तुल उन्माने ॥ तोलयति । अतूतुलत् ॥ कथं तुलयति
लना इत्यादि । अतुलोपमाभ्यामिति निपातनादकारान्तस्य तुलाशब्दस्य सिद्धौ ततो णि
॥ ८१ ॥ दुल उत्क्षेपे ॥ ८२ ॥ पुल महत्त्वे ॥ ८३ ॥ चुल समुच्छ्राये ॥ ८४ ॥ मूल रो
हणे ॥ ८५ ॥ कल विल क्षेपे ॥ ८७ ॥ बिल भेदने ॥ ८८ ॥ तिल स्नेहने ॥ ८९
चल भृतौ ॥ ९० ॥ पाल रक्षणे ॥ ९१ ॥ लूष हिंसायाम् ॥ ९२ ॥ शुल्ब माने ॥ ९३
शूर्प च ॥ ९४ ॥ चुट छेदने ॥ ९५ ॥ मुट संचूर्णने ॥ ९६ ॥ पडि पसि नाशने ॥
ण्डयति । पण्डति । पंसयति । पंसति ॥ ९८ ॥ व्रज मार्गसंस्कारगत्योः ॥ १०० ॥ शुल्क
अतिस्पर्शने ॥ १०१ ॥ चपि गत्याम् ॥ चम्पयति । चम्पति ॥ १०२ ॥ क्षपि क्षान्त्याम्
क्षम्पयति । क्षम्पति ॥ १०३ ॥ छजि कृच्छ्रजीवने ॥ १०४ ॥ श्वर्त गत्याम् ॥ १०५
श्वभ्र च ॥ १०६ ॥ ज्ञप मिच्च ॥ अयं ज्ञाने ज्ञापने च वर्तते ॥ **मितां ह्रस्वः** । ६ ।
। ९२ ॥ मितामुपधाया ह्रस्वः स्याण्णौ परे । ज्ञपयति ॥ १०७ ॥ यम च परिवेषणे
चान्मित् । परिवेषणमिह वेष्टनम् । न तु भोजनम् नापि वेष्टना । यमयति चन्द्र
परिवेष्टतीत्यर्थः ॥ १०८ ॥ चह परिकल्कने ॥ चहयति । अचीचहत् । कथादि
माणस्य तु अदन्तत्वेनाग्लोपित्वाद्दीर्घसन्वद्भावौ न । अचचहत् ॥ चप इत्येके ॥
पयति ॥ रह त्याग इत्येके ॥ अरीरहत् । कथादेस्तु । अररहत् ॥ १११ ॥ बल
णने ॥ बलयति ॥ ११२ ॥ चिञ् चयने ॥ **चिस्फुरोर्णौ** । ६ । १ । ५४ ॥ अन
वा स्यात् ॥ **अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ** । ७ । ३ । ३६ ॥
ति । चपयति । भित्करणसामर्थ्यादस्य णिज्विकल्पः । चयते । प्रणिचयति । प्रणिच
ति । नान्ये मितोऽहेतौ । अहेतौ स्वार्थे णिचि ज्ञपादिभ्योऽन्ये मितो न स्युः । शम
[illegible] मित्त्वं न ॥ ११३ ॥ घट्ट चलने ॥ ११४ ॥ मुस्त संघाते ॥

॥ ११५ ॥ खट्ट संवरणे ॥ ११६ ॥ षट्ट स्फिट्ट चुबि हिंसायाम् ॥ ११९ ॥ पुल
संघाते ॥ १२० ॥ पूर्ण इत्येके ॥ पुणेत्यन्ये ॥ १२१ ॥ पुंस अभिवर्धने ॥ १२२ ॥
टकि बन्धने ॥ टङ्कयति । टङ्कति ॥ १२३ ॥ धूस कान्तिकरणे ॥ धूसयति । दन्त्या-
न्तः । मूर्धन्यान्तइत्येके । तालव्यान्त इत्यपरे ॥ १२४ ॥ कीट वर्णे ॥ १२५ ॥ चूर्ण
सङ्कोचने ॥ १२६ ॥ पूज पूजायाम् ॥ १२७ ॥ अर्क स्तवने ॥ तपन इत्येके ॥१२८॥
शुठ आलस्ये ॥ १२९ ॥ शुठि शोषणे ॥ शुण्ठयति । शुण्ठति ॥ १३० ॥ जुड प्रेरणे
॥ १३१ ॥ गज मार्ज शब्दार्थौ ॥ गजयति । मार्जयति ॥ १३३ ॥ मर्च च ॥ मर्चयति
॥ १३४ ॥ घृ प्रस्रवणे ॥ स्रावण इत्येके ॥ १३५ ॥ पचि विस्तारवचने ॥ पञ्चयति ।
पचते इति व्यक्तार्थस्य शपि गतम् ॥ १३६ ॥ तिज निशाने ॥ तेजयति ॥ १३७ ॥
कृत संशब्दने ॥ **उपधायाश्च** । ७ । १ । १०१ ॥ धातोरुपधाभूतस्य ऋत इत्स्या-
त् । रपरत्वम् । उपधायां चेति दीर्घः । कीर्तयति अचीकृतत् । अचीकृतत् । अचिकी-
र्तत् ॥ १३८ ॥ वर्ध छेदनपूरणयोः ॥ १३९ ॥ कुबि आच्छादने ॥ कुम्बयति ॥
क्षुबि इत्येके ॥ १४१ ॥ लुबि तुबि अदर्शने ॥ अर्दने इत्येके ॥ १४३ ॥ ह्रप व्य-
क्तायां वाचि ॥ क्लृपेत्येके ॥ १४५ ॥ चुटि छेदने ॥ १४६ ॥ इल प्रेरणे ॥ पलयति ।
लिनत् ॥ १४७ ॥ म्रक्ष म्लेच्छने ॥ १४८ ॥ म्लेछ अव्यक्तायां वाचि ॥ १४९ ॥
ब वर्ह हिंसायाम् ॥ १५१ ॥ केचिदिह गर्ज गर्द शब्दे गर्ध अभिकाङ्क्षायामिति
पठन्ति ॥ १५४ ॥ गुर्द पुर्व निकेतने ॥ १५६ ॥ जसि रक्षणे ॥ मोक्षण इति के-
चित् । जंसयति । जंसति ॥ १५७ ॥ ईड स्तुतौ ॥ १५८ ॥ जसु हिंसायाम् ॥
१५९ ॥ पिडि संघाते ॥ १६० ॥ रुष रोषे ॥ रुठ इत्येके ॥ १६२ ॥ डिप क्षेपे ॥
१६३ ॥ ष्टुप समुच्छ्राये ॥ १६४ ॥ आकुस्मादात्मनेपदिनः ॥ कुस्मनाम्नो धेनि यद्गते
मित्याप्येत्यर्थः । अकर्तृगामिफलार्थमिदम् ॥ चित संचेतने ॥ चेतयते । अचीनि-
॥ १ ॥ दशि दंशने ॥ दंशयते । अददंशत । इदित्वाण्णिजभावे । दंशति । आ-
त्मनेपदं णिच्सन्नियोगेनैवेति व्याख्यातारः ॥ नलोपे सञ्जिसाहचर्याद् ध्यादे-
ग्रहणम् ॥ २ ॥ दसि दर्शनदंशनयोः ॥ दंसयते । दंसति । दसेत्यप्येके ॥ ४ ॥ डप
डिप संघाते ॥ ६ ॥ तत्रि कुटुम्बधारणे । तन्त्रयते । चान्द्रास्तुधातुद्वयमिति मत्वा
भाषणे इत्युदाहरन्ति ॥ ८ ॥ मन्त्रि गुप्तपरिभाषणे ॥ ९ ॥ स्पश ग्रहणसंश्लेषणयोः
॥ ११ ॥ तर्ज भर्त्स तर्जने ॥ १२ ॥ बस्त गन्ध अर्दने ॥ बस्तयते । गन्धयते ॥
॥ विष्क हिंसायाम् । हिष्केत्येके ॥ १६ ॥ निष्क परिमाणे ॥ १७ ॥ लल ईप्सा-
॥ १८ ॥ कूण संकोचे ॥ १९ ॥ तूण पूरणे ॥ २० ॥ भ्रूण आशाविशङ्कयोः ॥
॥ शठ श्लाघायाम् ॥ २२ ॥ यक्ष पूजायाम् ॥ २३ ॥ स्यम वितर्के ॥ २४ ॥
गमने ॥ २५ ॥ शम लक्ष आलोचने ॥ नान्ये मित इति मित्त्वनिषेधः । शाम-

गर्थे ॥ २७ ॥ कुन्स आवर्तने ॥ २८ ॥ कुट छेदने ॥ कुट्ट इत्येके ॥ ३० ॥ गल स्र-
वणे ॥ ३१ ॥ भल आमण्डने ॥ ३२ ॥ कुट आप्रदाने । अवसादने इत्येके ॥ ३३ ॥
कुद्द प्रतापने ॥ ३४ ॥ चञ्चु प्रलम्भने ॥ ३५ ॥ वृष शक्तिबन्धने । शक्तिबन्धनं प्र-
जननसामर्थ्यं शक्तिसंबन्धश्च । वर्षयते ॥ ३६ ॥ मद तृप्तियोगे ॥ मदयते ॥ ३७ ॥
दिवु परिकूजने ॥ ३८ ॥ गृ विज्ञाने ॥ गारयते ॥ ३९ ॥ विद चेतनाख्याननिवासे-
षु । वेदयते ॥ ४० ॥ मनसार्थं विगते ज्ञाने वेत्ति विन्ते विचारणे ॥ विन्दते विन्दति
प्राप्तौ श्यन्लुक्श्नम्शेष्विदं क्रमात् ॥ मान स्तम्भे ॥ मानयते ॥ ४१ ॥ गु अनुल्ले-
पाम् । गावयते ॥ ४२ ॥ कुस्म नाम्नो वा ॥ कुस्मेति धातुः कुत्सितस्मयने वर्त-
कुस्मयते । अचुकुस्मत ॥ ४३ ॥ अथवा कुस्मेति प्रातिपदिकं ततो धात्वर्थे णिच् ।
स्याकुस्मीयाः ॥ ॥ चर्च अध्ययने ॥ १ ॥ बुक्क भाषणे ॥ २ ॥ शब्द उपसर्गादाविष्का-
रे च ॥ भाषणे । प्रतिशब्दयति । प्रतिश्रुतमाविष्करोतीत्यर्थः ॥ अनुपसर्गाच्च आ-
विष्कारे इत्येव । शब्दयति ॥ ३ ॥ कण निमीलने ॥ काणयति ॥ णौ चङ्युपधाया ह्र-
स्वः । काण्यादीनां वेति विकल्पते । अचीकणत् । अचकाणत् ॥ ४ ॥ जभि नाशने ॥
जम्भयति । जम्भति ॥ ५ ॥ षूद क्षरणे ॥ सूदयति । असूषुदत् ॥ ६ ॥ जसु ताड-
ने । जासयति । जसति ॥ ७ ॥ पश बन्धने । पाशयति ॥ ८ ॥ अम रोगे ॥ आम-
यति । नान्ये मित इति निषेधः । अम गत्यादौ घटादि गतः । तस्माद्धेतुमण्णौ न कम्य-
मिचमामिति निषेधः । आमयति ॥ ९ ॥ चट स्फुट भेदने ॥ विकासे घटादिः स्फु-
टति स्फोटते इत्युक्तम् ॥ ११ ॥ घट संघाते । घाटयति ॥ १२ ॥ हन्त्यर्थाश्च स्व-
गण्यामुक्ता अपि हन्त्यर्थाः स्वार्थे णिचं लभन्त इत्यर्थः ॥ दिवु मर्दने ॥ उदित्वात्
यतीत्यपि ॥ १३ ॥ अर्ज प्रतियत्ने । अयमर्थान्तरेऽपि । द्रव्यमर्जयति ॥ १४ ॥ घुषि-
र् विशब्दने ॥ घोषयति । घुषिरविशब्दन इति सूत्रेऽविशब्दन इति निषेधाल्लिङ्गादनि-
त्योऽस्य णिच् । घोषति । इरित्वादङ्वा । अघुषत् । अघोषीत् । ण्यन्तस्य तु । अजूघु-
षत् ॥ १५ ॥ आङः क्रन्द सातत्ये ॥ भौवादिकः क्रन्दधातुराह्वानादिष्ठ उक्तः स एवा-
ङ्पूर्वो णिचं लभते सातत्ये । आक्रान्दयति । अन्ये तु आङ्पूर्वो घुषिः क्रन्द सातत्ये इ-
त्याहुः । आघोषयति ॥ १६ ॥ लस शिल्पयोगे ॥ १७ ॥ तसि भूष अलङ्करणे ॥
अवतंसयति । अवतंसति । भूषयति ॥ १९ ॥ अर्ह पूजायाम् ॥ २० ॥ ज्ञा नियोगे ॥
आज्ञापयति ॥ २१ ॥ भज विश्राणने ॥ २२ ॥ शृधु प्रसहने । अशशर्धत् । अशीशृधत्
॥ २३ ॥ यत निकारोपस्कारयोः ॥ २४ ॥ स्यक लग आस्वादने ॥ रघ इत्येके ॥ लगे
त्यन्ये ॥ २८ ॥ अक्ष विशेषणे ॥ अक्षयति । उदित्त्वमिड्विकल्पार्थम् । अत एव णिजनि-
त्यो णिच् । अक्षति एवं शृधुजसप्रभृतीनामपि बोध्यम् ॥ २९ ॥ लिगि चित्रीकरणे ॥
लिङ्गयति । लिङ्गति ॥ ३० ॥ मुद संसर्गे ॥ मोदयति सक्तून् घृतेन ॥ ३१ ॥ ग्रस धारणे ।

ग्रहण इत्येके । वारण इत्यन्ये ॥ ३२ ॥ उध्रस उञ्छे ॥ उकारो धात्ववयव इत्येके । नेत्यन्ये । ध्रासयति । उध्रासयति ॥ ३४ ॥ मुच प्रमोचने मोदने च ॥३५॥ वस स्नेह-च्छेदापहरणेषु ॥ ३६ ॥ चर संशये ॥ ३७ ॥ च्यु सहने । हसने चेत्येके । च्याव-यति ॥ च्युसेत्येके । च्योसयति ॥ ३९ ॥ भुवोऽवकल्कने ॥ अवकल्कनं मिश्रीकरण-मित्येके । चिन्तनमित्यन्ये । भावयति ॥ ४० ॥ कृपेश्च ॥ कल्पयति ॥४१॥ आ स्वदः सकर्मकात् ॥ स्वदिमभिव्याप्य संभवत्कर्मभ्य एव णिच् ॥ ग्रस ग्रहणे ॥ ग्रासयति कलम् ॥ १ ॥ पुष धारणे पोषयत्याभरणम् ॥ २ ॥ दल विदारणे । दालयति ॥ ३ ॥ पट पुट लुट तुजि मिजि पिजि लुजि भजि लघि त्रसि पिसि कुसि दशि कुशि घट घटि बृहि बर्ह बल्ह गुप धूप विच्छ चीव पुथ लोकृ लोचृ णद कुप तर्क वृतु वृधु भाषा-र्थाः ॥ पाटयति । पोटयति । लोटयति । तुञ्जयति । तुञ्जति । एवं परेषाम् । घाटयति । घण्टयति ॥ नाग्लोपिशास्वृदिताम् । ७ । ४ । २ ॥ णिच्यग्लोपिनः शास्तेर्ऋ-दितां च उपधाया ह्रस्वो न स्याच्चङ्परे णौ । अलुलोकत् । अलुलोचत् । वर्तयति । व-र्धयति । उदित्वाद्वर्तति । वर्धति ॥ ४४ ॥ रुट लजि अजि दसि भृशि रुशि शीक नट पुटि जि चि रघि लघि अहि रहि महि च ॥ ५० ॥ लडि तड नल च ॥ ५३ ॥ पूरी आप्यायने ॥ ईदित्वं निष्ठायामिण्निषेधाय । अत एव णिज्वा । पूरयति । पूरति ॥ ५४ ॥ रुज हिंसायाम् ॥ ५५ ॥ ष्वद आस्वादने ॥ स्वाद इत्येके ॥ असिष्वदत् । दीर्घस्य लघोपदेशत्वात् । असिस्वदत् ॥ ५७ ॥ आ धृषाद्वा ॥ इत ऊर्ध्वं विभाषितणि-चो धृषधातुमभिव्याप्य ॥ युज पृच संयमने ॥ योजयति । योजति । अयौक्षीत् । प-र्चयति । पर्चति । पर्चिता । अपर्चीत् ॥ २ ॥ अर्च पूजायाम् ॥३॥ षह मर्षणे ॥ सा-हयति । स एवायं नागः सहति कलभेभ्यः परिभवम् ॥ ४ ॥ ईर क्षेपे ॥ ५ ॥ ली द्रवीकरणे । लापयति । लयति । लेता ॥६॥ वृजी वर्जने ॥ वर्जयति । वर्जति ॥ ७ ॥ वृञ् आवरणे । वारयति । वरति । वरते । वरिता वरीता ॥ ८ ॥ जॄ वयोहानौ । जारयति । जरति । जरिता । जरीता ॥ ९ ॥ ज्रि च । ज्राययति । ज्रयति । ज्रेता । ॥ १० ॥ रिच वियोजनसंपर्चनयोः ॥ रेचयति । रेचति । रेक्ता ॥ ११ ॥ शिष अस-र्वोपयोगे ॥ शेषयति । शेषति । शेष्टा । अशिक्षत् । अयं विपूर्वोऽतिशये ॥ १२ ॥ तप दाहे । तापयति । तपति । तप्ता ॥१३॥ तृप तृप्तौ । सन्दीपन इत्येके । तर्पयति । तर्पति । तर्पिता ॥ १४ ॥ छृदी सन्दीपने ॥ छर्दयति । छर्दति । छर्दिता । छर्दिष्यति । सेत्सि-ष्यति विकल्पेन । साहचर्यात्तत्र रौधादिकस्यैव ग्रहणात् ॥ १५ ॥ चृप छृप दृप सन्दीपनइत्येके । चर्पयति । छर्पयति ॥ १८ ॥ दृभी भये । दर्भति । दर्भिता ॥ १९ ॥ दृभ सन्दर्भे ॥ अयं तुदादावपीदित् ॥ २० ॥ श्रथ मोक्षणे ॥ हिंसायामित्येके ॥ २१ ॥ मी गतौ । माययति । मयति । मेता ॥ २२ ॥ ग्रन्थ बन्धने ॥ ग्रन्थयति ।

स्तन गदी देवशब्दे । स्तनयति । गदयति । अजगदत् ॥ १० ॥ पत गतौ वा ॥ वा-
ऽदन्तः । वाऽदन्त इत्येके । आद्ये । पतयति । पतति । पतांचकार । अपतीत् ।
द्वितीये । पातयति । अपीपतत् ॥ ११ ॥ पष अनुपसर्गात् । गतावित्येव । पषयति ॥
१२ ॥ स्वर आक्षेपे । स्वरयति ॥ १३ ॥ रच प्रतियत्ने ॥ रचयति ॥ १४ ॥ कल
गतौ संख्याने च ॥ १५ ॥ चह परिकल्कने । परिकल्कनं । दम्भः शाठ्यं च ॥१६ ॥
मह पूजायाम् ॥ महयति । महतीति शापि गतम् ॥ १७ ॥ सार कृप श्रथ दौर्बल्ये ॥
सारयति । कृपयति । श्रथयति ॥ २० ॥ स्पृह ईप्सायाम् ॥ २१ ॥ भाम क्रोधे ॥
अबभामत् ॥ २२ ॥ सूच पैशून्ये ॥ सूचयति । अषोपदेशत्वान्न षः । असुसूचत् ॥
२३ ॥ खेट भक्षणे ॥ तृतीयान्त इत्येके ॥ खोट इत्यन्ये ॥ २६ ॥ क्षोट क्षेपे ॥ २७॥
गोम उपलेपने ॥ अजुगोमत् ॥ २८ ॥ कुमार क्रीडायाम् ॥ अचुकुमारत् ॥ २९ ॥
शील उपधारणे । उपधारणमभ्यासः ॥ ३० ॥ साम सान्त्वप्रयोगे । अससामत् ।
साम सान्त्वने इत्यतीतस्य तु असीषमत् ॥ ३१ ॥ वेल कालोपदेशे । वेलयति ॥ ३२ ॥
काल इति पृथग्धातुरित्येके । कालयति ॥ ३३ ॥ पल्यूल लवनपवनयोः ॥ ३४ ॥
वात सुखसेवनयोः । गतिसुखसेवनेष्वित्येके । वातयति । अववातत् ॥ ३५ ॥
गवेष मार्गणे । अजगवेषत् ॥ ३६ ॥ वास उपसेवायाम् ॥ ३७ ॥ निवास आ-
च्छादने । अनिनिवासत् ॥ ३८ ॥ भाज पृथक्कर्मणि ॥ ३९ ॥ सभाज प्रीतिद-
र्शनयोः । प्रीतिसेवनयोरित्यन्ये । सभाजयति ॥ ४० ॥ ऊन परिहाणे ॥ ऊन-
यति । ओः पुयण्ज्यीति सूत्रे पयोरिति वक्तव्ये वर्णप्रत्याहारजकारग्रहणं लिङ्गं णिचि
अच आदेशो न स्थानिवत्त्वे कार्ये इति । यत्र द्विरुक्तावभ्यासोत्तरखण्डस्याद्योच् प्रक्रियायां
परिनिष्ठिते रूपे वाऽवर्णो लभ्यते तत्रैवायं निषेधः । ज्ञापकस्य सजातीयापेक्षत्वात्तेना-
चिकीर्तदिति सिद्धम् । प्रकृते [?] मध्यच्छब्दस्य द्वित्वं तत उत्तरखण्डेऽल्लोपः । औननत् ।
आप्यकानूननत् ॥ ४१ ॥ ध्वन शब्दे ॥ अदध्वनत् ॥ ४२ ॥ कूट परितापे । परिदाहे
इत्यन्ये ॥ ४६ ॥ सङ्केत ग्राम कुण गुण चामन्त्रणे ॥ चात्कूटोऽपि । कूटयति । सङ्के-
तयति । ग्रामयति । कुणयति । गुणयति ॥ पाठान्तरम् ॥ केत श्रावणे निमन्त्रणे च ॥
केतयति कुण । गुण चामन्त्रणे ॥ चकारात्केतने । कूण सङ्कोचने इति ॥ ४८ ॥
स्तेन चौर्ये ॥ अतिस्तेनत् ॥ ४९ ॥ आगर्वादात्मनेपदिनः ॥ पद गतौ ॥ पदयते ।
अपपदत् ॥ १ ॥ गृह ग्रहणे । गृहयते ॥ २ ॥ मृग अन्वेषणे । मृगयते । मृगयती-
ति कण्ड्वादिः ॥ ३ ॥ कुह विस्मापने ॥ ४ ॥ शूर वीर विक्रान्तौ ॥ ६ ॥ स्थूल
परिबृंहणे ॥ स्थूलयते । अतुस्थूलत् ॥ ७ ॥ अर्थ उपयाच्ञायाम् । अर्थयते । आर्तथत्
१८ ॥ सत्र सन्तानक्रियायाम् ॥ अससत्रत् । अनेकाच्त्वान्न षोपदेशः । सिसत्रयिषते
१९ ॥ गर्व माने ॥ गर्वयते । अदन्तत्वसामर्थ्याण्णिज्विकल्पः । धातोरन्त उदात्तो

ग्रन्थति ॥ २३ ॥ श्रीक आमर्षणे ॥ २४ ॥
स्वरितेत् । अर्दयति । अर्दति । अर्दते ॥ २६ ॥
ति । हिनस्तीति श्नमि गतम् ॥ २७ ॥ अर्ह पू
आसादयति । आसीदति । पाघ्रेति सीदादेशः ।
न्ध शौचकर्मणि ॥ शुन्धिता । अशुन्धीत् । अ
स्वरितेत् ॥ ३१ ॥ जुष परितर्कणे ॥ परितर्कण
परितर्पणं परितृप्तिक्रिया । जोषयति । जोषति । प्र
धूञ् कम्पने ॥ णाविलयधिकृत्य ॥ धूञ्प्रीञोर्नुग्
धवते । केचित्तु धूञ्प्रीणोरिति पठित्वा प्रीणातिसा
यति ॥ ३३ ॥ अयं स्वादौ क्र्यादौ तुदादौ च ।
धूनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति
धूनयति चम्पकपुष्परेणून्यत्कानने धवति चन्दनमञ्ज
ति । धूञ्प्रीणोरिति हरदत्तोक्तपाठे तु । प्राययति
ग्रन्थ सन्दर्भे ॥ ३६ ॥ आप्लृ लम्भने । आपय
स्वरितेदयमित्येके आपते ॥ ३७ ॥ तनु श्रद्धोपकरण
ति । वितानयति । तनति । वितनति ॥ ३८ ॥
ति । चनति ॥ ३९ ॥ वद सन्देशवचने ॥ वाद
अनुदात्तेदित्येके । ववदतुः । ववदिथ । ववदे । व
वाचयति । वचति । वक्ता । अवाक्षीत् ॥ ४१ ॥
ति । मानिता । विचारणे ॥ भौवादिकोनित्यसन्न
थाः । मन्यते इति दिवादौ । मनुते इति तनादौ
भावयते । भवते । णिच्सन्नियोगेनैवात्मनेपदमित्येके
मे ॥ ४४ ॥ मार्ग अन्वेषणे ॥ ४५ ॥ कठि शोके
इत्यात्मनेपदी गतः ॥ ४६ ॥ मृजू शौचालंकारयोः
मार्ष्टि ॥४७॥ मृष तितिक्षायाम् । स्वरितेत् । मर्षयति
इति दिवादौ ॥ सेचने तु मर्षति ॥ ४८ ॥ धृष
इत्याधृषीयाः ॥ अदन्ताः ॥ कथ वाक्यप्रबन्धे ॥
थयति । अग्लोपित्वान्न दीर्घसन्वद्भावौ । अचक
वाग्दत्तीनि गतम् ॥ २ ॥ गण संख्याने ॥ गण
९,७ ॥ गणेरभ्यासस्य ईस्वाचङ्परे णौ । जगण
इवट स्पष्टभाषणे ॥ ६ ॥ पट वट ग्रन्थे

द्वैधीकरणे ॥ अचिच्छेदत् ॥ २२ ॥ छद अपवारणइत्येके ॥ छदयति ॥ २३ ॥
लभ प्रेरणे ॥ २४ ॥ व्रण गात्रविचूर्णने ॥ २५ ॥ वर्ण वर्णक्रियाविस्तारगुणवचनेषु ॥
वर्णक्रिया वर्णकरणम् । सुवर्णं वर्णयति । कथां वर्णयति । विस्तृणातीत्यर्थः । हरिं
वर्णयति । स्तौतीत्यर्थः ॥ २६ ॥ बहुलमेतन्निदर्शनम् ॥ अदन्तधातुनिदर्शनमित्यर्थः ।
बहुलकादन्येऽपि बोध्याः ॥ तद्यथा ॥ पर्ण हरितभावे ॥ अपपर्णत् ॥ विष्क दर्शने ॥
क्षप प्रेरणे ॥ वस निवासे ॥ तुत्थ आवरणे ॥ एवमान्दोलयति । प्रेङ्खोलयति । विड-
म्बयति । अवधीरयतीत्यादि । अन्ये तु दशगणीपाठोबहुलमित्याहुः ॥ तेनापठिता
अपि सौत्रलौकिकवैदिकाबोध्याः । अपरे तु नवगणीपाठोबहुलमित्याहुः । तेनाप-
ठितेभ्योऽपि क्वचित्स्वार्थे णिच् । रामोराज्यमचीकरदिति यथेत्याहुः । चुरादिभ्यएव
बहुलं णिजित्यर्थइत्यन्ये । सर्वे पक्षाः प्राचां ग्रन्थे स्थिताः ॥ णिङङ्गान्निरसने ॥ अङ्ग-
वाचिनः प्रातिपदिकान्निरसनेऽर्थे णिङ् स्यात् । हस्तौ निरस्यति हस्तयते । पादयते ॥ श्वे-
ताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च ॥ श्वेताश्वादीनां चतुर्णामश्वादयोलुप्यन्ते
णिङ् च धात्वर्थे । श्वेताश्वमाचष्टे तेनातिक्रामति वा श्वेतयते । अश्वतरमाचष्टेऽश्वयते ।
आलोडितं वाचां विमर्शः । तत्करोति गालोडयते । आह्वरयते । केचित्तु णिचमे-
वानुवर्तयन्ति तन्मते परस्मैपदमपि ॥ पुच्छादिषु धात्वर्थइत्येव सिद्धम् ॥ णिजन्तादे-
बहुलवचनादात्मनेपदमस्तु । मास्तु पुच्छभाण्डेति णिङ्विधिः । सिद्धशब्दोग्रन्थान्ते
मङ्गलार्थः ॥

## ॥ इति चुरादयः ॥

**स्वतन्त्रस्यप्रयोजकोहेतुश्च** । १ । ४ । ५५ ॥ कर्तुः प्रयोजकोहेतुसंज्ञः कर्तृसंज्ञश्च
[illegible] ॥ **हेतुमति च** । ३ । १ । २६ ॥ प्रयोजकव्यापारे प्रेषणादौ वाच्ये धातोर्णिच्
[illegible] । भवन्तं प्रेरयति भावयति । णिचश्चेति कर्तृगे फले आत्मनेपदम् । भावयते ।
[illegible]बापांबभूव ॥ **ओः पुयण्ज्यपरे** । ७ । ४ । ८० ॥ सनि परे यदङ्गं तदवयवा-
भ्यासोकारस्येत्वं स्यात्पवर्गयण्जकारेष्ववर्णपरेषु परतः । अबीभवत् । अपीपवत् । मू-
[illegible] । अमीमवत् । अयीयवत् । अरीरवत् । अलीलवत् । अजीजवत् ॥ **स्रवतिशृ-
णोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा** ।७।४।८१॥ एषामभ्यासोकारस्येत्वं
वा स्यात्सन्यवर्णपरे धात्वक्षरे परे । असिस्रवत् । असुस्रवत् । नाग्लोपीति ह्रस्वनिषे-
धः । अशशासत् । अडुढौकत् । अचीचकासत् । मतान्तरे । अचचकासत् । अग्लोपीति
[illegible]नुप्रकरणे उदाहरिष्यते । ण्यन्ताण्णिच् । पूर्वविप्रतिषेधादपवादत्वाद्वा वृद्धिं बा-
धित्वा णिलोपः ॥ चोरयति । णौ चङीति ह्रस्वः । दीर्घोलघोः । न चाग्लोपित्वाद्दीर्घयो-
[illegible]संभवः । ण्याकृतिनिर्देशात् । अचूचुरत् ॥ **णौ च संश्चङोः** । ६ । १ ।
[illegible] ॥ सन्परे चङ्परे च णौ श्वयतेः संप्रसारणं वा स्यात् । संप्रसारणं तदाश्रयं च कार्यं

कं ॥ आदेशयत् ॥
॥ कर्णयति । कर्णीति ॥ ९ ॥ प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच ॥
त्वर्थे णिच् स्यादिष्ठे यथा॰ प्रातिपदिकस्य पुंवद्भावरभावटिलोपविन्मतुब्लोप-
स्फाद्यादेशभसंज्ञास्तद्वण्णावपि स्युः । पटुमाचष्टे पटयति । पल्वाद्वृद्धौ
। अपीपटत् । णौ चङीत्यत्र भाष्ये तु वृद्धेर्लोपो बलीयानिति स्थितम् ।
त्करोति तदाचष्टे ॥ पूर्वस्य प्रथः ॥ कटोलाचष्ट इति धात्वर्थमात्र
इर्थस्य विवक्षितः ॥ तेनातिक्रामति ॥ अश्वेनातिक्रामति अश्वयति ।
मति हस्तयति ॥ धातुरूपं च ॥ णिच्प्रकृतिर्धातुरूपं प्रतिपद्यते ॥ च-
मुत्रार्थः । तथा च वार्तिकम् ॥ आख्यानात्कृतस्तदाचष्टे कृल्लुक्प्रकृतिप्र-
त्यापत्तिः प्रकृतिवच्च कारकमिति * ॥ कंसवधमाचष्टे कंसं घातयति । इह कंसं हन्

हनस्तोऽचिण्णलोः ।७।३।३२॥ हन्तेस्तकारोऽन्तादेशः स्याच्चिण्णल्व-
ति । नन्वत्राङ्गसंज्ञा धातुसंज्ञा च कंसविशिष्टस्य प्राप्ता । ततश्चाद्वित्वयो-
कुत्वतत्वे न स्याताम् । धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात् । सत्यम् ।
चकारो भिन्नक्रमः । कारकं च धात्वर्थम् । हेतुमण्णिचः प्रकृतेर्हन्यादेर्हेतुम-
कारकं धातावनन्तर्भूतं द्वितीयान्तं यादृशं च कार्यं कुत्वतत्वादि तदिहापी-
मजीघतत् । कर्तृकरणाद्धात्वर्थे ॥ कर्तुर्व्यापारार्थं यत्करणं न तु चक्षुरा-
र्थः । असिना हन्ति असयति ॥ वष्क दर्शने ॥ १ ॥ चित्र चित्रीकरणे ॥
ण इत्यर्थः । कदाचिद्दर्शने । चित्रेत्ययमद्भुतदर्शने णिचं लभते । चित्रय-
। अंस समाघाते ॥ ३ ॥ वट विभाजने ॥ ४ ॥ लज प्रकाशने ॥ वटि ल-
॥ वण्टयति । लञ्जयति । अदन्तेषु पाठबलाददन्तत्वे वृद्धिरित्यन्ये । व-
। लज्ञापयति ॥ ७ ॥ शाकटायनस्तु कथादीनां सर्वेषां पुकमाह तन्मते
। गणापयतीत्यादि ॥ मिश्र सम्पर्के ॥ ८ ॥ सङ्ग्राम युद्धे ॥ अयमनुदात्तेत्
यात् । अससंग्रामत ॥ ९ ॥ स्तोम श्लाघायाम् ॥ अतुस्तोमत् ॥ १० ॥
भेदने ॥ करणभेदन इत्यन्ये । कर्णेति धात्वन्तरमित्यन्ये ॥ १२ ॥ अन्ध
॥ उपसंहार इत्यन्ये । आन्दधत् ॥ १३ ॥ दण्ड दण्डनिपातने ॥ १४ ॥
॥ १६ ॥ सुख दुःख तत्क्रि-

वर्णक्रिया वर्णकरणम् । सुवर्णं वर्णयति । कथां वर्णयति । विस्तृणातीत्यर्थः
वर्णयति । स्तौतीत्यर्थः ॥ २६ ॥ बहुलमेतन्निदर्शनम् ॥ अदन्तधातुनिदर्शनमित्य
बाहुलकादन्येऽपि बोध्याः ॥ तद्यथा ॥ पर्ण हरितभावे ॥ अपपर्णत् ॥ विष्क दर्
क्षप प्रेरणे ॥ वस निवासे ॥ तुत्थ आवरणे ॥ एवमान्दोलयति । प्रेङ्खोलयति ।
म्ययति । अवधीरयतीत्यादि । अन्ये तु दशगणीपाठोबहुलमित्याहुः ॥ तेना
अपि सौत्रलौकिकवैदिकाबोध्याः । अपरे तु नवगणीपाठोबहुलमित्याहुः । ते
टितेभ्योऽपि क्वचित्स्वार्थे णिच् । रामोराज्यमचीकरदिति यथेत्याहुः । चुरादि
बहुलं णिजित्यर्थइत्यन्ये । सर्वे पक्षाः प्राचां मन्ये स्थिताः ॥ णिङङ्गान्निरसने ॥
वाचिनः प्रातिपदिकान्निरसनेऽर्थे णिङ् स्यात् । हस्तौ निरस्यति हस्तयते । पादयते
तास्वाश्वतरगालोडिताहूरकाणामश्वतरेतकलोपश्च ॥ श्वेताश्वादीनां चतुर्णामश्वादयोः
णिङ् च धात्वर्थे । श्वेताश्वमाचष्टे तेनातिक्रामति वा श्वेतयते । अश्वतरमाचष्टेऽश्व
गालोडितं वाचां विमर्शः । तत्करोति गालोडयते । आह्वरयते । केचित्तु णि
वानुवर्तयन्ति तन्मते परस्मैपदमपि ॥ पुच्छादिषु धात्वर्थइत्येव सिद्धम् ॥ णिज
व बहुलवचनादात्मनेपदमस्तु । मास्तु पुच्छभाण्डेति णिङ्विधिः । सिद्धशब्दोमं
मङ्गलार्थः ॥

॥ इति चुरादयः ॥

**तत्प्रयोजकोहेतुश्च । १ । ४ । ५५ ॥** कर्तुः प्रयोजकोहेतुसंज्ञः कर्तृ
स्यात् ॥ **हेतुमति च । ३ । १ । २६ ॥** प्रयोजकव्यापारे प्रेषणादौ वाच्ये धात
स्यात् । भवन्तं प्रेरयति भावयति । णिचश्चेति कर्तृगे फले आत्मनेपदम् । भाव
भावयांबभूव ॥ **ओः पुयण्ज्यपरे । ७ । ४ । ८० ॥** सनि परे यदङ्गं तदव
भ्यासोकारस्येत्वं स्यात्पवर्गयण्जकारेष्ववर्णपरेषु परतः । अबीभवत् । अपीपवत्
त् । अमीमवत् । अयीयवत् । अरीरवत् । अलीलवत् । अजीजवत् ॥ **स्रवति
णोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा । ७।४।८१॥** एषामभ्यासोका
वा स्यात्तन्यवर्णपरे भावक्षरे परे । असिस्रवत् । असुस्रवत् । भाग्लोपीति
धः । अशशासत् । अडुढौकत् । अचीचकासत् । मतान्तरे । अचचकासत् । अगं
सुब्धातुप्रकरणे उदाहरिष्यते । ण्यन्ताण्णिच् । पूर्वविप्रतिषेधादपवादत्वाद्वा वृ
धित्वा णिलोपः ॥ चोरयति । णौ चङीति ह्रस्वः । दीर्घोलघोः । न चाग्लोपित्व
रत्यसंभवः । ण्याकृतिनिर्देशात् । अचूचुरत् ॥ **णौ च संश्चङोः । ६ ।
३१ ॥** सन्परे चङ्परे च णौ श्वयतेः संप्रसारणं वा स्यात् । संप्रसारणं तदाश्रयं च

पौन ग्लापहि । अचाकनम्मत् । पर्णीशिनत् । ग्लपीशहत् । आटिटत् । आशिशत् ।
बहिरङ्गोऽप्युपधाह्रस्वोऽङ्गवृत्तत्वाल्लोपेन । ओणेर्ऋदित्करणाल्लिङ्गात् । मा भवानिदिधत् । ण्
जादावेशतो विभाषया वृद्धिः । मा भवान्प्रेदिधत् । न न्द्रा इति नदराणां न द्वित्वम् ।
औन्दिदत् । आड्डिडत् । आर्चिचत् । उब्ज आर्जवे । उपदेशे दकारोपधः । भुजन्यु-
ब्जौ पाण्युपतापयोरिति सूत्रे निपातनादस्य बः । स चान्तरङ्गोऽपि द्वित्वविषये न न्द्रा
इति निषेधाज्जिशब्दस्य द्वित्वे कृते प्रवर्तते न तु ततः प्राक् । दकारोच्चारणसामर्थ्यात् ।
औब्जिजत् । अजादेरित्येव । नेह । अदिद्रपत् ॥ रभेरशब्लिटोः । ७ । १ । ६३ ॥
रभेर्नुम् स्यादचि न तु शब्लिटोः ॥ लभेश्च । ७ । १ । ६४ ॥ अररम्भत् । अललम्भ-
त् । हेरचङीति सूत्रेऽचङीत्युक्तेः कुत्वं न । अजीहयत् । अत्स्मृदृत्वरप्रथम्रदस्तृस्पशा-
म् । असस्मरत् । अददरत् । तपरत्वसामर्थ्यादत्र लघोर्न दीर्घः ॥ विभाषा वेष्टिचे-
ष्टयोः । ७ । ४ । ९६ ॥ अभ्यासस्यात्वं वा स्याच्चङ्परे णौ । अववेष्टत् । अविवेष्टत् ।
अचचेष्टत् । अचिचेष्टत् । भ्राजभासेत्यादिना वोपधाह्रस्वः । अबिभ्रजत् । अबभ्राज-
त् ॥ काण्यादीनां वेति वक्तव्यम् * ॥ ण्यन्ताः कणरणभणश्रणलुपहेठः काण्यादयः
पञ्चाप्ये उक्ताः । ह्वायिवाणिलोटिलोपयश्चत्वारोऽधिका न्यासे । चाणिलोटी अप्यन्यत्र ।
इत्थं द्वादश ॥ अचीकणत् । अचकाणत् ॥ स्वापेश्चङि ॥ ६ । १ । १८ ॥ ण्यन्त-
स्य स्वापेश्चङि संप्रसारणं स्यात् । असूषुपत् ॥ शाच्छासाह्वाव्यावेपां युक् ।
७ । ३ । ३७ ॥ णौ । पुकोऽपवादः । शाययति । ह्वाययति ॥ ह्वः संप्रसारणम् ।
६ । १ । ३२ ॥ सन्परे चङ्परे च णौ ह्वः संप्रसारणं स्यात् । अजूहवत् । अजुहा-
वत् ॥ लोपः पिबतेरीच्चाभ्यासस्य । ७ । ४ । ४ ॥ पिबतेरुपधायालोपः
स्यादभ्यासस्य ईदन्तादेशश्च चङ्परे णौ । अपीप्यत् । अर्तिह्रीति पुक् । अर्पयति । ह्रेपय-
ति । व्लेपयति । रेपयति । यलोपः । क्नोपयति । क्ष्मापयति । स्थापयति ॥ तिष्ठतेरित्
। ७ । ४ । ५ ॥ उपधाया इदादेशः स्याच्चङ्परे णौ । अतिष्ठिपत् ॥ जिघ्रतेर्वा ।
७ । ४ । ६ ॥ अजिघ्रिपत् । अजिघ्रपत् । उर्ऋत् ॥ अचीकृतत् । अचिकीर्तत् । अवी-
वृतत् । अववर्तत् । अमीमृजत् । अममार्जत् । पातेर्णौ लुग्वक्तव्यः * ॥ पुकोऽपवा-
दः । पालयति ॥ वो विधूनने जुक् । ७ । ३ । ३८ ॥ वातेर्जुक् स्याण्णौ कम्पे-
ऽर्थे । वाजयति । कम्पे किम् । केशान्वापयति । विभाषा लीयतेः ॥ लीलोर्नुग्लु-
कावन्यतरस्यां स्नेहविपातने । ७ । ३ । ३९ ॥ लीयतेर्लातेश्च क्रमान्नुग्लुकावागमौ
वा स्तो णौ स्नेहद्रवे । विलीनयति । विलापयति । विलालयति । वा घृतम् । ली ई इति
ईकारप्रश्लेषादात्वपक्षे नुक् न ॥ स्नेहद्रवे किम् । लोहं विलापयति ॥ प्रलम्भनाभिभ-

वयोः प्रलम्भने चार्थे ॥ जटाभिलापयते । पूजामधिगच्छतीत्यर्थः । श्येनावा
मुल्लापयते । अभिभवतीत्यर्थः । बालमुल्लापयते । वञ्चयतीत्यर्थः ॥ **बिभेते**
**भये** । ६ । १ । ५६ ॥ बिभेतेरेचआत्वं वा स्याअयोजकाद्भयं चेत् ॥
**स्म्योर्हेतुभये** । १ । ३ । ६८ ॥ ण्यन्ताभ्यामाभ्यामात्मनेपदं स्याद्धेतोश्चेद्भयस्
सूत्रे भयग्रहणं धात्वर्थोपलक्षणम् । मुण्डोभापयते ॥ **भियोहेतुभये षुक्** ।
३ । ४० ॥ भी ई इतीकारः प्रश्लिष्यते । ईकारान्तस्य भियः षुक् स्यात् णौ हेतु
भीषयते ॥ **नित्यं स्मयतेः** । ६ । १ । ५७ ॥ स्मयतेरेचोनित्यमात्वं स्याण्णौ
स्मये ॥ जटिलोविस्मापयते । हेतोश्चेद्भयस्मयावित्युक्तेर्नेह । कुञ्चिकयैनं भाययति
स्माययति । कथं तर्हि विस्मापयन् विस्मितमात्मवृत्ताविति । मनुष्यवाचेति करणात्
तत्र स्मयः । अन्यथा शानजपि स्यात् । सत्यम् । विस्माययन्नित्येव पाठ इति सा
यिकाः । यद्वा । मनुष्यवाक् प्रयोज्यकर्त्री विस्मापयते तया सिंहोविस्मापयन्निति
न्ताण्णौ शतेति व्याख्येयम् ॥ **स्फायोवः** । ७ । ३ । ४१ ॥ णौ ॥ स्फावय
**शदेरगतौ तः** । ७ । ३ । ४२ ॥ शदेर्णौ तोऽन्तादेशः स्यान्न तु गतौ । शात
गतौ तु । गाः शादयति गोविन्दः । गमयतीत्यर्थः ॥ **रुहः पोऽन्यतरस्याम्**
३।४३ ॥ णौ । रोपयति । रोहयति । **क्रीङ्जीनां णौ** । ६ । १ । ४८ ॥ ए
आत्वं स्याण्णौ । क्रापयति । अध्यापयति । जापयति ॥ **णौ च संश्चङोः** । २
। ५१ ॥ सन्परे चङ्परे च णौ इङोगाङ्वा स्यात् । अध्यजीगपत् । अध्यापि
**सिध्यतेरपारलौकिके** । ६ । १ । ४९ ॥ ऐहलौकिकेऽर्थे विद्यमानस्य सिध
आत्वं स्याण्णौ । अन्नं साधयति । निष्पादयतीत्यर्थः । अपारलौकिके किम् ।
सिद्धयति । तत्त्वं निश्चिनोति । तं प्रेरयति । सेधयति तापसं तपः ॥ **प्रजने वीयते**
१ । ५५ ॥ अस्यैव आत्वं वा स्याण्णौ प्रजनेऽर्थे । वापयति वाययति वा गाः पुरो
गर्भं ग्राहयतीत्यर्थः ॥ **ऊदुपधाया गोहः** । ६ । ४ । ८९ ॥ गूहयति ॥ **दोषे**
। ६ । ४ । ९० ॥ दुष इति सुवचम् । दुष्यतेरुपधाया ऊत्स्याण्णौ । दूषयति ॥ **वा**
**चित्तविरागे** । ६ । ४ । ९१ ॥ विरागोऽप्रीतता । चित्तं दूषयति दोषयति वा का
मितां ह्रस्वः । भ्वादौ चुरादौ च मितउक्ताः । घटयति ॥ जनीजृष् । जनयति । ज
जृणातेस्तु । जारयति ॥ रञ्जेर्णौ मृगरमणे नलोपोवक्तव्यः * ॥ मृगरमणमा
रजयति मृगान् । मृगेति किम् । रञ्जयति पक्षिणः । रमणादन्यत्र तु रञ्जयति मृग
दानेन । चुरादिषु शपादिश्चिन् ॥ चिस्फुरोर्णौ । चपयति चययतीत्युक्तम् । चिनो
चापयति । चाययति । स्फारयति । स्फोरयति । अपुस्फरत् । अपुस्फुरत् ॥ **उभौ**

[illegible] ।८।४।३१॥ [illegible] प्राकृ[illegible] [illegible] । [illegible] ॥ णौ गमिरबोधने ।२।४।४६॥ [illegible] गमयति । बोधने तु प्रत्याययति । [illegible] । अधिगमयति । [illegible] [illegible] कृत्वा । [illegible] ॥ [illegible] वक्तव्यम् * ॥ [illegible] [illegible] । [illegible] द्वित्वं [illegible] । [illegible] [illegible] । [illegible] । [illegible] [illegible] । [illegible] । [illegible] । [illegible] [illegible] । [illegible] । [illegible] । [illegible] ॥

॥ इति ण्यन्तप्रक्रिया ॥

**धातोः कर्मणः समानकर्तृकादिच्छायां वा ।३।१।७॥** इषिकर्मण इषिणैककर्तृकाद्धातोः सन्प्रत्ययो वा स्यादिच्छायाम् । धातोर्विहितत्वादिह सन आर्धधातुकत्वम् । इट् । द्वित्वम् । सन्यतः ॥ पठितुमिच्छति पिपठिषति । कर्मणः किम् । गमनेनेच्छतीति करणान्मा भूत् । समानकर्तृकात्किम् । शिष्याः पठन्त्वितीच्छति गुरुः । वाग्रहणाद्वाक्यमपि । लुङ्सनोर्घस्लृ । एकाच उपदेशेऽनुदात्तादिति नेट् । सस्य तत्वम् । अत्तुमिच्छति जिघत्सति । ईर्ष्यतेस्तृतीयस्येति यिशब्दस्य द्वित्वम् । ईर्ष्यियिषति । ईर्ष्यिषिषति ॥ **रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ।१।२।८॥** एभ्यः संश्च क्त्वा कितौ स्तः । रुरुदिषति । विविदिषति । मुमुषिषति ॥ **सनि ग्रहगुहोश्च ।७।२।१२॥** ग्रहेर्गुहेरुगन्ताच्च सन इण्न स्यात् । ग्रहिज्येति संप्रसारणम् । सनः षत्वस्य सिद्धत्वात्कुत्वभावः । जिघृक्षति । जुघुक्षति ॥ **किरश्च पञ्चभ्यः ।७।२।७५॥** कॄ गॄ दृङ् धृङ् प्रच्छ एभ्यः सनइट् स्यात् । पिपृच्छिषति । चिकरिषति । जिगरिषति । जिगलिषति ॥ अत्रेटो दीर्घो नेष्टः * ॥ दिदरिषते । दिधरिषते । कथं दिधीर्षुरिति । भौवादिकयोर्धृङ्धृञोरिति गृहाण ॥ **इको झल् ।१।२।९॥** इगन्ताज्झलादिः सन् कित्स्यात् । बुभूषति । दीङ् । दातुमिच्छति दिदीषते । एज्विषयत्वाभावान्मीनातिमिनोतीत्यात्वं न । अतएव सनि मीमेति सूत्रे माधातोः पृथग्ग्रहणं कृतम् ॥ **हलन्ताच्च ।१।२।१०॥** इक्समीपाद्धलः परो झलादिः सन् कित्स्यात् । गुहू । जुघुक्षति । बिभित्सति । इकः किम् । यियक्षते । झल्किम् । विवर्धिषते । हल्ग्रहणं जातिपरम् । तृन्हू । तितृक्षति । तितृंहिषति ॥ **अज्झनगमां सनि ।६।४।१६॥** अजन्तानां हन्तेरजादेशगमेश्च दीर्घः स्याज्झलादौ सनि । सन्लिटोर्जेः [illegible] ॥ **सनि च ।२।**

: । अधिजिगमिषति कर्मणि तङ् । परस्मैपदेष्विणुकेर्नेट् । झलादौ सनीति दीर्घः । रगांसते । अधिजिगांसते । अजादेशस्येणुकेर्गच्छतेर्न दीर्घः । जिगंसते । संजिगंसते ॥ **ङश्च । २ । ४ । ४८ ॥** इङोगमिः स्यात्सनि । अधिजिगांसते ॥ **रलो व्युपधा-त्लादेः संश्च । १ । २ । २६ ॥** उश्च इश्च वी ते उपधे यस्य तस्माद्धलादेरलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः । द्युतिस्वाप्योः संप्रसारणम् । दिद्युतिषते । दिद्योतिषते । रुचिषते । रुरोचिषते । लिलिखिषति । लिलेखिषति । रलः किम् । दिदेविषति । व्युपधात्किम् । विवर्तिषते । हलादेः किम् । एषिषिति । इह नित्यमपि द्वित्वं गुणेन बाध्यते । उपधाकार्यं हि द्वित्वात्प्रबलम् । ओणेर्ऋदित्करणस्य सामान्यापेक्षज्ञापकत्वात् ॥ **सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् । ७ । २ । ४९ ॥** इवन्तेभ्य ऋधादिभ्यश्च सन इड्वा स्यात् । इडभावे । हलन्ताच्चेति कित्त्वम् । ग्रोरिति यस्य ऊठ् यण् । द्वित्वम् । दुद्यूषति । दिदेविषति । स्तौतिण्योरेवेति वक्ष्यमाणनियमान्न षः । सुस्यूषति । सिसेविषति ॥ **आप्ज्ञप्यृधामीत् । ७ । ४ । ५५ ॥** एषामच ईत्स्या-त्सादौ सनि ॥ **अत्र लोपोऽभ्यासस्य । ७ । ४ । ५८ ॥** सनि मीमेत्यारभ्य यदुक्तं तत्राभ्यासस्य लोपः स्यात् । आप्तुमिच्छति ईप्सति । अर्धितुमिच्छति स्परत्वम् । र-र्तम् । ईर्त्सति । अर्दिधिषति । बिभ्रज्जिषति । बिभर्जिषति । बिभ्रक्षति । बिभर्क्षति ॥ **दम्भ इच् । ७ । ४ । ५६ ॥** दम्भेरच इत्स्यादीच सादौ सनि । अभ्यासलोपः । हलन्ताच्चेत्यत्र हल्ग्रहणं जातिपरमित्युक्तम् । तेन सनः कित्त्वान्नलोपः । धिप्सति । धीप्सति । दिदम्भिषति । शिश्रीषति । शिश्रयिषति । उदोष्ठ्यपूर्वस्य । सुस्वूर्षति । सिस्वरिषति । युयूषति । यियविषति । ऊर्णुनूषति । ऊर्णुनुविषति । ऊर्णुनविषति । न च परत्वाद्गुणावादेशयोः सतोरभ्यासे उकारेण भाव्यमिति वाच्यम् । द्विर्वचनेऽचीति सूत्रेण द्वित्वे कर्तव्ये स्थानिरूपातिदेशादादेशनिषेधाद्वा । न च सन्नन्तस्य द्वित्वं प्रति कार्यि-त्वान्निमित्तता कथमिति वाच्यम् । कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते न त्वननुभवन्नपि । न चेह सन् द्वित्वमनुभवति । बुभूर्षति । बिभरिषति । ऋतिः पुगन्तो निर्देशः चकारान्तश्चौरादिकश्च । इडभावे इकोझलिति कित्त्वान्न गुणः । अज्झने-ति दीर्घः परत्वाण्णिलोपेन बाध्यते । आर्तृत्सति ईर्त्स । ज्ञीप्सति जिज्ञपयिषति । असि-तस्तु । सिषासयिषति । अनासनेत्याद्यम् । सिषासति । सिसनिषति ॥ तनिपतिदरिद्राति-भ्यः सनो वा इड्वाच्यः ॥ **तनोतेर्विभाषा । ६ । ४ । १७ ॥** अस्योपधाया दीर्घो वा स्याज्झलादौ सनि । तितांसति । तितंसति । तितनिषति ॥ आत्ताद्गुरत्वं सन्वदन्तः ॥ धा मुमूर्षति । पूर्लं पिपतिषति ॥ **सनि मीमाघुरभलभशकपतपदामच इस् । ७ । ४ । ५४ ॥** एषामच इस् स्यात्सादौ सनि । अभ्यासलोपः । स्कोरिति सलोपः । पित्सति । दिदरिद्रिषति दिदरिद्रासति । तुमिप् मीप् आभ्यां सन् । पूर्वादेस्य मि-

नोतेरपि भीरूपाविशेषादिस् । सः सीति तः । मित्सति । मित्सते । मा माने
ति । माङ्मेङो । मित्सते । दोङ्दाणोः । दित्सति । देङ् । दित्सते । दाण् । दि
दित्सते । धेट् । धित्सति । धाञ् । धित्सति । धित्सते । रिप्सते । लिप्सते ।
शिक्षति । शक मर्षणइति दिवादिः । स्वरितेत् । शिक्षति । शिक्षते । पित्सते
धो हिंसायां सनीस् वाच्यः * ॥ रित्सति । हिंसायां किम् । आरिरात्सति ॥ 
**ऽकर्मकस्य गुणोवा । ७ । ४ । ५७ ॥** सादौ सनि । अभ्यासलोपः । मोक्ष
मुक्षते वा वत्सः स्वयमेव । अकर्मकस्य किम् । मुमुक्षति वत्सं कृष्णः । न वृद्भ्
र्भ्यः । विवृत्सति । तङि तु । विवर्तिषते । सेसिचीति वेट् । निनर्तिषति । निनृत्स
**इट् सनि वा । ७ । २ । ४१ ॥** वृङ्वृञ्भ्यामॄदन्ताच्च सनइड्वा स्यात् । तित
ति । तितरीषति । तितीर्षति । विवरिषति । विवरीषति । वुवूर्षति । वृङ् वु
विवरिषते । वुवूर्षते ॥ **स्मिपूङ्रञ्ज्वशां सनि । ७ । २ । ७४ ॥** स्मि पू
अञ्जू अशू एभ्यः सनइट् स्यात् । सिस्मयिषते । पिपविषते । अरिरिषति ।
रिस्शब्दस्य द्वित्वम् । इस् इति सनोऽवयवः । कार्यभागिति कार्यिणोनिमित्तत्वायं
द्विर्वचनेचीति न प्रवर्तते । अञ्जिजिषति । अशिशिषते । अभौ साभ्यासस्य । प्राणि
ति । उच्छेसुक् । चुत्वम् । पूर्वत्रासिद्धीयमद्वित्वइति षष्ठाभ्यां सहितस्येदोद्वित्वम् ।
लादिः शेषः । उचिच्छिषति । निमित्तापाये नैमित्तिकापायइति त्वनित्यम् । च्छ्वोः
सतुकग्रहणाज्ज्ञापकात् । प्रकृतिप्रत्यापत्तिवचनाद्वा । णौ च संश्चङोरिति सूत्राभ्या
योगाद् श्वयतेः संप्रसारणं च वा । अधिजिगापयिषति । अध्यापिपयिषति । शि
ययिषति । शुशावयिषति । ह्वः संप्रसारणम् । जुहावयिषति । णौ द्वित्वात्प्रागच
देशोनेत्युक्तत्वादुकारस्य द्वित्वम् । पुस्फारयिषति । चुक्षावयिषति । ओः पुयण्ज्यपरे
पिपावयिषति । पिपावयिषति । बिभावयिषति । रिरावयिषति । लिलावयिषति
जिजावयिषति । पुयण्जि किम् । नुनावयिषति । अपरे किम् । बुभूषति । स
तीतीत्वं वा । सिस्रावयिषति । सुस्रावयिषतीत्यादि । अपर इत्येव । सुस्रूषते ॥ स्तौ
**तिण्योरेव षण्यभ्यासात् । ८ । ३ । ६१ ॥** अभ्यासेणः परस्य स्तौतिण्यन्तयो
च सस्य षः स्यात्षभूते सनि नान्यस्य । तुष्टूषति । सुनिस्वाप्योरित्युरम् । सुष्वापि

न्तान्न सनिष्यते ॥ ॥ शैषिकाच्छैषिकः सरूपोन तेन शालीये भव इति वाक्यमेव न तु छान्ताच्छः । सरूपः किम् ॥ अहिच्छत्रे भवआहिच्छत्रः । आहिच्छत्रे भवआहिच्छत्रीयः । अण्णन्ताच्छः । तथा मत्वर्थात्सरूपः स न । धनवानस्यास्ति । इह मतुबन्तान्मतुप् न । विरूपस्तु स्यादेव । दण्डिमती शाला । सरूपइत्यनुवर्त्यते । अर्थद्वारा सादृश्यं तस्यार्थः । तेन इच्छासन्नन्तादिच्छासन्न । स्वार्थसन्नन्तात्तु स्यादेव । जुगुप्सिषते । मीमांसिषते ॥

॥ इति सन्प्रक्रिया ॥

**धातोरेकाचोहलादेः क्रियासमभिहारे यङ् । ३ । १ । २२ ॥** पौनःपुन्यं भृशार्थश्च क्रियासमभिहारस्तस्मिन् द्योत्ये यङ् स्यात् ॥ **गुणोयङ्लुकोः । ७ । ४ । ८२ ॥** अभ्यासस्य गुणः स्याद्यङि यङ्लुकि च । सनाद्यन्ताइति धातुत्वाल्लडादयः । ङिदन्तत्वादात्मनेपदम् । पुनःपुनरतिशयेन वा भवति बोभूयते । बोभूयांचक्रे । अबोभूयिष्ट । धातोः किम् । आर्धधातुकत्वं यथा स्यात् । तेन सुवोवचिरित्यादि । एकाचः किम् । पुनःपुनर्जागर्ति । हलादेः किम् । भृशमीक्षते । भृशं शोभते । रोचते इत्यत्र यङेति भाष्यम् । पौनःपुन्ये तु स्यादेव । रोरुच्यते । शोशुभ्यते ॥ सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्योयङ् वाच्यः * ॥ आद्यास्त्रयश्चुरादावदन्ताः । सोसूच्यते । सोसूत्र्यते । मोमूत्र्यते । अनेकाच्त्वेनानोपदेशत्वात्षत्वं न ॥ **यस्य हलः । ६ । ४ । ४९ ॥** यस्येति संघातग्रहणम् । हलः परस्य यशब्दस्य लोपः स्यादार्धधातुके । आदेः परस्य । अतोलोपः ॥ सोसूचांचक्रे । सोसूचिता । सोसूत्रिता । मोमूत्रिता ॥ **दीर्घोऽकितः । ७ । ४ । ८३ ॥** अकितोऽभ्यासस्य दीर्घः स्याद्यङि यङ्लुकि च । अटाट्यते ॥ **यङि च । ७ । ४ । ३० ॥** अर्तेः संयोगादेश्च ऋतोगुणः स्याद्यङि । यकारपररेफस्य न द्वित्वनिषेधः । अरार्यते इति भाष्योदाहरणात् । अरारिता । अशासिता । ऊर्णोनूयते । वेभिद्यते । अल्लोपस्य स्थानिवत्त्वान्नोपधागुणः । वेभिदिता ॥ सासद्यते ॥ **नित्यं कौटिल्ये गतौ । ३ । १ । २३ ॥** गत्यर्थात्कौटिल्यएव यङ् स्यान्न तु क्रियासमभिहारे । कुटिलं व्रजति वाव्रज्यते ॥ **लुपसदचरजपजभदहदशगृभ्योभावगर्हायाम् । ३ । १ । २४ ॥** एभ्यो धात्वर्थगर्हायामेव यङ् स्यात् । गर्हितं लुम्पति लोलुप्यते । सासद्यते ॥ **चरफलोश्च । ७ । ४ । ८७ ॥** अनयोरभ्यासस्यातोनुक् स्याद्यङ्यङ्लुकोः । नुगित्यनेनानुस्वारोलक्ष्यते ॥ स च पदान्तवद्वाच्यः * ॥ वा पदान्तस्येति यथा स्यात् ॥ **उत्परस्यातः । ७ । ४ । ८८ ॥** चरफलोरभ्यासात्परस्यातउत्स्याद्यङ्यङ्लुकोः । हलि चेति दीर्घः । चञ्चूर्यते । चंचूर्यते । पम्फुल्यते । पंफुल्यते ॥ **जपजभदहदशभञ्जपशां च । ७ । ४ । ८६ ॥** एषामभ्यासस्य नुक् स्याद्यङ्यङ्लुकोः । गर्हितं जपति जञ्जप्यते इत्यादि ॥ **ग्रोयङि । ८ । २ । २० ॥** गिरते रेफस्य लत्वं स्याद्यङि । गर्हितं गिलति जेगिल्यते । घु-

मास्थेतीत्वम् । गुणः । देदीयते । पेपीयते । सेषीयते । विभाषा श्वेः । शोशू
श्वीयते । यङि च । साास्मर्यते । रीङ् ऋतः । चेक्रीयते । द्युद् । संचेस्कीयते
**चोयङि । ८ । ३ । ११२ ॥** सिचः सस्य षोन स्याद्यङि । निसेसिच्य
**कवतेर्यङि । ७ । ४ । ६३ ॥** कवतेरभ्यासस्य चुत्वं न स्याद्यङि । यं
कौतिकुवत्योस्तु चोकूयते ॥ **नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्**
**४ । ८४ ॥** एषामभ्यासस्य नीगागमः स्याद्यङ्यङ्लुकोः । अकित इत्युक्तेर्न
नलोपः । वनीवच्यते । सनीस्रस्यतइत्यादि ॥ **नुगतोऽनुनासिकान्तस्य**
**४ । ८५ ॥** अनुनासिकान्तस्याङ्गस्य योऽभ्यासोऽदन्तस्तस्य नुक् स्यात् । नुकानु
ध्यतइत्युक्तम् । यँय्यम्यते । यंयम्यते । तपरत्वसामर्थ्याद्भूतपूर्वदीर्घस्यापि न
क्रोधे । याभाम्यते । ये विभाषा । जाजायते । जञ्जन्यते । हन्तेर्हिंसायां येङि
वाच्यः * ॥ जेघ्नीयते । हिंसायां किम् । जङ्घन्यते ॥ **रीगृदुपधस्य च । ७ । ४ ।**
ऋदुपधस्य धातोरभ्यासस्य रीगागमः स्याद्यङ्यङ्लुकोः । वरीवृत्यते । क्षुभादिष्व
नरीनृत्यते । जरीगृह्यते । उभयत्र णत्वम् । चलीक्लृप्यते । रीगृत्वतइति वक्तव्यम्
वरीवृश्च्यते । परीपृच्छ्यते ॥ **स्वपिस्यमिव्येञां यङि । ६ । १ । १९ ।**
सारणं स्याद्यङि । सोषुप्यते । सेसिम्यते । वेवीयते ॥ **न वशः । ६ । १ ।**
वावश्यते ॥ **चायः की । ६ । १ । २१ ॥** चेकीयते ॥ **ई घ्राध्मोः । ७**
**३१ ॥** जेघ्रीयते । देध्मीयते ॥ **अयङ्यि क्ङिति । ७ । ४ । २२ ॥** शीङो
देशः स्याद्यादौ क्ङिति परे । शाशय्यते । अभ्यासस्य ह्रस्वः । ततोगुणः । डोढौ
तोत्रौक्यते ॥

## ॥ इति यङन्तप्रक्रिया ॥

**यङोऽचि च । २ । ४ । ७४॥** यङोऽच्प्रत्यये लुक् स्याच्चकारात्तं विनापि
लुक् स्यात् । अनैमित्तिकोऽयम् । अन्तरङ्गत्वादादौ भवति । ततः प्रत्ययलक्षणेन य
स्याद्वित्वम् । अभ्यासकार्यम् । धातुत्वाल्लडादयः । शेषात्कर्तरीति परस्मैपदम् । अनु
ङितइति तु न । ङित्वस्य प्रत्ययाप्रत्ययसाधारणत्वेन प्रत्ययलक्षणाप्रवृत्तेः । यत्र

प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणात् । द्विःप्रयोगो द्विर्वचनं षाष्ठमिति सिद्धान्तात् । बोभवीति । बोभोति । बोभूतः । बोभुवति । बोभवांचकार । बोभविता । अबोभवीत् । अबोभोत् । अबोभूताम् । अबोभवुः । बोभूयात् । बोभूयाताम् । बोभूयास्ताम् । गातिस्थेति सिचो लुक् । यङो वेतीट्पक्षे गुणं बाधित्वा नित्यत्वाद्वुक् । अबोभूवीत् । अबोभोत् । अबोभूताम् । अभ्यस्तात् झेर्जुस् । नित्यत्वाद्वुक् । अबोभूवुः । अबोभविष्यदित्यादि । पास्पर्धीति । पास्पर्धि । पास्पर्धः । पास्पर्धति । पास्पर्त्सि । हुझल्भ्यो हेर्धिः । पास्पर्धि । लङ् । अपास्पर्त् । अपास्पर्द् सिपि दश्चेति रुत्वपक्षे । रोरि । अपास्पाः । जागाद्धि । जागात्सि । अजागात् । सिपि रुत्वपक्षे । अजागाः । नाथृ । नानात्ति । नानात्तः । दध । दादद्धि । दादद्धः । दाधत्सि । अदाधत् । अदादधुः । अदाधः । अदाधत् । लुङि । अदादाधीत् । अदादधीत् । चोस्कुन्दीति । चोस्कुन्ति । अचोस्कुन् । अचोस्कुन्ताम् । अचोस्कुन्दुः । मोमुदीति । मोमोत्ति । मोमोदांचकार । मोमोदिता । अमोमुदीत् । अमोमोत् । अमोमुत्ताम् । अमोमुदुः । अमोमुदीः । अमोमोः । अमोमोत् । लुङि गुणः । अमोमोदीत् । चोकूर्दी । चोकुर्दीति । लङ् सिप् । अचोकूर्त् । अचोकुर्दीत् । सिप्पक्षे । अचोकूः । अचोखूः । अजोगूः । वनीवञ्चीति । वनीवङ्क्ति । वनीवक्तः । वनीवचति । अवनीवञ्चीत् । अवनीवन् । जङ्गमीति । जङ्गन्ति । अनुदात्तोपदेशेत्यनुनासिकलोपः । जङ्गतः । जङ्गमति । म्वोश्च । जङ्गन्मि । जङ्गन्वः । एकाज्ग्रहणोक्त्याभेण्निषेधः । जङ्गमिता । अनुनासिकलोपस्याभीयत्वेनासिद्धत्वान्न हेर्लुक् । जङ्गहि । मो नो धातोः । अजङ्गन् । अनुबन्धनिर्देशान्न च्लेरङ् । इरन्तेति न वृद्धिः । अजङ्गमीत् । अजङ्गमिष्टाम् । हन्तेर्यङ्लुक् । अभ्यासाच्चेति कुत्वं यद्यपि हो हन्तेरित्यतो हन्तेरित्यनुवर्त्य विहितं तथापि यङ्लुकि भवत्येवेति न्यासकारः । श्तिपा शपेति निषेधस्त्वनित्यः । गुणो यङ्लुकोरिति सामान्यापेक्षज्ञापकादिति भावः । जङ्घनीति । जङ्घन्ति । जङ्घतः । जङ्घ्नति । जङ्घनिता । श्तिपा निर्देशाज्जादेशो न । जङ्घहि । अजङ्घनीत् । अजङ्घन् । जङ्घन्यात् । आशिषि [illegible] । वध्यात् । अवधीत् । अवधिष्टामित्यादि । वधादेशस्य द्वित्वं न भवति । स्थानिवत्त्वेनानभ्यासस्येति निषेधात् । तद्धि समानाधिकरणं धातोर्विशेषणम् । बहुव्रीहित्वात् । आङ्पूर्वात्तु आङो यमहन इत्यात्मनेपदम् । आजङ्घते इत्यादि । उत्परस्येति तपरत्वान्न गुणः । हलि चेति दीर्घस्तु स्यादेव । तस्यासिद्धत्वेन तपरत्वनिवर्तनायोगात् । चञ्चुरीति । चञ्चूर्ति । चञ्चूर्तः । चञ्चुरति । अचञ्चुरीत् । अचञ्चुः । जञ्जनीति । जञ्जन्ति । जनसनेत्यात्वम् । जञ्जातः । गमहनेत्युपधालोपः । जञ्ज्ञति । जञ्जाहि । जञ्जनानि । अजञ्जनीत् । अजञ्जन् । अजञ्जाताम् । अजञ्ज्ञुः । ये विभाषा । जञ्जायात् । जञ्जन्यात् । अजञ्जनीत् । अजञ्जानीत् । ऊर्णोतेर्वृद्धिरित्यत्र नाभ्यस्तस्येत्यनुवृत्तेरूर्णोर्न वृद्धिः । योयोति । योयवीति । अयो-

अभ्यर्हितं च * ॥ तापसपर्वतौ ॥ वर्णानामानुपूर्व्येण * ॥ ब्राह्मणक्षत्रियविट्शूद्राः
भ्रातुर्ज्यायसः * ॥ युधिष्ठिरार्जुनौ ॥ **द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् ।** २ । ४ ।
२ ॥ एषां द्वन्द्वएकवत्स्यात् । पाणिपादम् । मार्दङ्गिकपाणविकम् ॥ रथिकाश्वारोह
समाहारस्यैकत्वादेकत्वे सिद्धे नियमार्थं प्रकरणम् । प्राण्यङ्गादीनां समाहारस्य
स्यात् ॥ **अनुवादे चरणानाम् ।** २ । ४ । ३ ॥ चरणानां द्वन्द्वएकवत्स्यात्
द्यसोपन्यासे ॥ स्थेणोर्लुङीति वक्तव्यम् * ॥ उदगात्कठकालापम् । प्रत्यष्ठात्कठ
थुमम् ॥ **अध्वर्युक्रतुरनपुंसकम् ।** २ । ४ । ४ ॥ यजुर्वेदे विहितोयः क्रतु
द्वाचिनामनपुंसकलिङ्गानां द्वन्द्वएकवत्स्यात् । अर्काश्वमेधम् । अध्वर्युक्रतुः किं
इषुवज्रौ सामवेदे विहितौ । अनपुंसकं किम् । राजसूयवाजपेये । अर्धर्चादी ॥ अध्य
**यनतोऽविप्रकृष्टाख्यानाम् ।** २ । ४ । ५ ॥ अध्ययनेन प्रत्यासन्ना आख्या ये
तेषां द्वन्द्वएकवत् । पदकक्रमकम् ॥ **जातिरप्राणिनाम् ।** २ । ४ । ६ ॥
प्राणिवर्ज्यजातिवाचिनां द्वन्द्वएकवत् । धानाशष्कुलि । प्राणिनां तु । विट्शूद्राः ।
द्रव्यजातीयानामेव । नेह । रूपरसौ । गमनाकुञ्चने । जातिप्राधान्यएवायमेकवद्भावः ।
द्रव्यविशेषविवक्षायां तु । बदरामलकानि ॥ **विशिष्टलिङ्गोनदीदेशोऽग्रामाः**
। २ । ४ । ७ ॥ ग्रामवर्ज्यनदीदेशवाचिनां भिन्नलिङ्गानां समाहारे द्वन्द्वएकवत्स्यात् ।
उद्ध्यश्च इरावती च उद्ध्येरावति । गङ्गा च शोणश्च गङ्गाशोणम् । कुरवश्च कुरुक्षेत्रं च
कुरुकुरुक्षेत्रम् । भिन्नलिङ्गानां किम् । गङ्गायमुने । मद्रकेकयाः । अग्रामाः किं ।
जाम्बवं नगरम् । शालूकिनी ग्रामः । जाम्बवशालूकिन्यौ ॥ **क्षुद्रजन्तवः ।** २ ।
४ । ८ ॥ एषां समाहारे द्वन्द्वएकवत्स्यात् । यूकालिक्षम् । आनकुलात्क्षुद्रजन्तवः ।
**येषां च विरोधः शाश्वतिकः ।** २ । ४ । ९ ॥ एषां प्राग्वत् । अहिनकुलम् ।
गोव्याघ्रम् । काकोलूकमित्यादौ परत्वाद्विभाषा वृक्षमृगेति प्राप्तं चकारेण बाध्यते ॥
**शूद्राणामनिरवसितानाम् ।** २ । ४ । १० ॥ अबहिष्कृतानां शूद्राणां
स्यात् । तक्षायस्कारम् । पात्राद्बहिष्कृतानां तु चण्डालमृतपाः ॥ **गवाश्वप्रभृती**
**नि च ।** २ । ४ । ११ ॥ यथोच्चारितानि साधूनि स्युः । गवाश्वम् । दासीदासमित्यादि
**विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरो**
**त्तराणाम् ।** २ । ४ । १२ ॥ वृक्षादीनां सप्तानां द्वन्द्वः । अश्ववडवेत्यादि द्वन्द्वत्रयं च प्राग्वत्
वृक्षादौ विशेषाणामेव ग्रहणम् । प्लक्षन्यग्रोधम् । प्लक्षन्यग्रोधाः । रुरुपृषतम् । रुरु

---

१ कुद्दालखनित्रैः [illegible] वा [illegible] वा । [illegible] ।

२ [illegible]

पताः । कुशकाशम् । कुशकाशाः । व्रीहियवम् । व्रीहियवाः । दधिघृतम् । दधिघृते । महिषम् । गोमहिषाः । शुकबकम् । शुकबकाः । अश्ववडवम् । अश्ववडवौ । पूर्वापरम् । पूर्वापरे । अधरोत्तरम् । अधरोत्तरे ॥ फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां बहुप्रकृतिरेव द्वन्द्व एकवदिति वाच्यम् * ॥ बदराणि चामलकानि च बदरामलकम् । जातिरप्राणिनामित्येकवद्भावः । नेह बदरामलके । रथिकाश्वारोहौ । प्लक्षन्यग्रोधौ इत्यादि । विभाषावृक्षेति सूत्रे येऽप्राणिनस्तेषां ग्रहणं जातिरप्राणिनामिति नित्ये प्राप्ते विकल्पार्थम् । पशुग्रहणं हस्त्यश्वादिषु सेनाङ्गत्वान्नित्ये प्राप्ते मृगाणां मृगैरेव शकुनीनां तैरेवोभयत्र द्वन्द्वः । अन्यैस्तु सहेतरेतरयोगएवेति नियमार्थं मृगशकुनिग्रहणम् । एवं पूर्वापरमधरोत्तरमित्यपि । अश्ववडवग्रहणं तु पक्षे नपुंसकत्वार्थम् । अन्यथा परत्वात्पूर्ववदश्ववडवाविति स्यात् ॥ **विप्रतिषिद्धं चानधिकरणवाचि । २ । ४ । १३ ॥** विरुद्धार्थानामद्रव्यवाचिनां द्वन्द्व एकवद्वा स्यात् । शीतोष्णम् । शीतोष्णे । वैकल्पिकः समाहारद्वन्द्वश्चार्थे इति सूत्रेण प्राप्तः सविरुद्धार्थानां यदि भवति तर्हि अद्रव्यवाचिनामेवेति नियमार्थमिदम् । तेन द्रव्यवाचिनामितरेतरयोगएव । शीतोष्णे उदके स्तः । विप्रतिषिद्धं किम् । नन्दकपाञ्चजन्यौ । इह पाक्षिकः समाहारद्वन्द्वोभवत्येव ॥ **न दधिपयआदीनि । २ । ४ । १४ ॥** एतानि नैकवत्स्युः । दधिपयसी[१] । इध्माबर्हिषी । निपातनाद्दीर्घः । ऋक्सामे । वाङ्मनसे ॥ **अधिकरणैतावत्त्वे च । २ । ४ । १५ ॥** द्रव्यसंख्यावगमे एकवदेवेति नियमो न स्यात् । दश दन्तोष्ठाः ॥ **विभाषा समीपे । २ । ४ । १६ ॥** अधिकरणैतावत्त्वस्य सामीप्येन परिच्छेदे समाहारएवेत्येवंरूपोनियमोवा स्यात् । उपदशं दन्तोष्ठम् । उपदशाः दन्तोष्ठाः ॥ **आनङ् ऋतोद्वन्द्वे । ६ । ३ । २५ ॥** विद्यायोनिसंबन्धवाचिनामृदन्तानां द्वन्द्वे आनङ् स्यादुत्तरपदे परे । होतापोतारौ । होतृपोतृनेष्टोद्गातारः । मातापितरौ । पुत्रेऽन्यतरस्यामित्यतोमण्डूकप्लुत्या पुत्रइत्यनुवृत्तेः पितापुत्रौ ॥ **देवताद्वन्द्वे च । ६ । ३ । २६ ॥** इहोत्तरपदे परे आनङ् । मित्रावरुणौ । वायुशब्दप्रयोगे प्रतिषेधः । * ॥ अग्निवायू । वाय्वग्नी । पुनर्द्वन्द्वग्रहणं प्रसिद्धसाहचर्यस्य परिग्रहार्थम् । तेन ब्रह्मप्रजापती इत्यादौ नानङ् । एतद्धि नैकहविर्भागित्वेन श्रुतं नापि लोके प्रसिद्धं साहचर्यम् ॥ **ईदग्नेः सोमवरुणयोः । ६ । ३ । २७ ॥** देवताद्वन्द्वे इत्येव ॥ **अग्नेः स्तुत्स्तोमसोमाः । ८ । ३ । ८२ ॥** अग्नेः परेषामेषां सस्य षः स्यात्समासे । अग्निष्टुत् । अग्निष्टोमः । अग्नीषोमौ । अग्नीवरुणौ ॥ **इद्वृद्धौ । ६ । ३ । २८ ॥**

---

१ दधिपयसी, सर्पिर्मधुनी, मधुसर्पिषी, ब्रह्मप्रजापती, शिववैश्रवणौ, स्कन्दविशाखौ, परिव्राजककौशिकौ, प्रवर्ग्योपसदौ, [illegible]कृष्णौ, इध्माबर्हिषी, दीक्षातपसी, अध्ययनतपसी, उलूखलमुसले, आद्यवसाने, श्रद्धामेधे, ऋक्सामे, वाङ्मनसे । इति दधिपयआदयः ।

वृद्धिमत्युत्तरपदे अग्नेरीदादेशः स्याद्देवताद्वन्द्वे । अग्नामरुतौ देवते अस्य आग्निमारुतं कर्म । अग्नीवरुणौ देवते अस्य आग्निवारुणम् । देवताद्वन्द्वे चेत्युभयपदवृद्धिः । इकि किम् । पाक्ये अनवर्मोर्न च शक्तिना इत्म् । वृद्धौ किम् । आग्नेन्द्रः । नेन्द्रस्य परस्येत्युत्तरपदवृद्धिप्रतिषेधः । विष्णौ न * ॥ आग्नावैष्णवम् ॥ **दिवो द्यावा** ।६।३।२९॥ देवताद्वन्द्वे उत्तरपदे । द्यावाभूमी । द्यावाक्षामा ॥ **दिवसश्च पृथिव्याम्** ।६।३।३०॥ दिवशब्दस्य । चाद् द्यावा । आदेशे अकारोच्चारणं सकारस्य रुत्वं माभूदित्येतदर्थम् । द्यौश्च पृथिवी च दिवस्पृथिव्यौ । द्यावापृथिव्यौ ॥ छन्दसि दृष्टानुविधिः । द्यावा चिदस्मै पृथिवी । दिवस्पृथिव्योररतिमित्यत्र पदकाराविसर्गं पठन्ति ॥ **उषासोषसः** ।६।३।३१॥ उषस्शब्दस्योषासादेशो देवताद्वन्द्वे । उषासानक्ता ॥ **मातरपितरावुदीचाम्** ।६।३।३२॥ मातरपितरौ । उदीचां किम् । मातापितरौ ॥ **द्वन्द्वाच्चुदषहान्तात्समाहारे** ।५।४।१०६॥ चवर्गान्ताद् दषहान्ताच्च द्वन्द्वाट्टच् स्यात्समाहारे । वाक् च त्वक् च वाक्त्वचम् । त्वक्स्रजम् । शमीदृषदम् । वाक्त्विषम् । छत्रोपानहम् । समाहारे किम् । प्रावृट्शरदौ ॥

## ॥ इति द्वन्द्वः ॥

सरूपाणाम् । रामौ । रामाः ॥ विरूपाणामपि समानार्थानाम् * ॥ वक्रदण्डश्च कुटिलदण्डश्च वक्रदण्डौ । कुटिलदण्डौ ॥ **वृद्धो यूना तल्लक्षणश्चेदेव विशेषः** ।१।२।६५॥ यूना सहोक्तौ गोत्रं शिष्यते गोत्रयुवप्रत्ययमात्रकृतं चेत्तयोः कृत्स्नं वैरूप्यं स्यात् । गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ । वृद्धः किम् । गर्गगार्ग्यायणौ । यूना किम् । गर्गगार्ग्यौ । तल्लक्षणः किम् । भागवित्तिभागवित्तिकौ । कृत्स्नं किम् । गार्ग्यवात्स्यायनौ ॥ **स्त्री पुंवच्च** ।१।२।६६॥ यूना सहोक्तौ वृद्धा स्त्री शिष्यते तदर्थश्च पुंवत् । गार्गी च गार्ग्यायणौ च गर्गाः । अस्त्रियामित्यनुवर्तमाने यञञोश्चेति लुक् । दाक्षी च दाक्षायणश्च दाक्षी ॥ **पुमान् स्त्रिया** ।१।२।६७॥ स्त्रिया सहोक्तौ पुमान् शिष्यते तल्लक्षण एव विशेषश्चेत् । हंसी च हंसश्च हंसौ ॥ **भ्रातृपुत्रौ स्वसृदुहितृभ्याम्** ।१।२।६८॥ भ्राता च स्वसा च भ्रातरौ । पुत्रश्च दुहिता च पुत्रौ ॥ **नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्** ।१।२।६९॥ अक्लीबेन सहोक्तौ क्लीबं शिष्यते तच्च वा एकवत्स्यात्तल्लक्षण एव विशेषश्चेत् । शुक्लः पटः । शुक्ला शाटी । शुक्लं वस्त्रम् । तदिदं शुक्लम् । तानीमानि शुक्लानि ॥ **पिता मात्रा** ।१।२।७०॥ मात्रा सहोक्तौ पिता वा शिष्यते । माता च पिता च पितरौ । मातापितरौ वा ॥ **श्वशुरः श्वश्र्वा** ।१।२।७१॥ श्वश्र्वा सहोक्तौ श्वशुरो वा शिष्यते तल्लक्षण एव विशेषश्चेत् । श्वश्रूश्च श्वशुरश्च श्वशुरौ । श्वश्रूश्वशुरौ ॥ **त्यदादीनि स**

१ त्यदादिः सर्वाद्यन्तर्गणः ।

**नित्यम् । १ । २ । ७२ ॥** सर्वैः सहोक्तौ त्यदादीनि नित्यं शिष्यन्ते । स च देवदत्तश्च तौ ॥ त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते * ॥ स च यश्च यौ ॥ पूर्वशेषोऽपि दृश्यते इति भाष्यम् ॥ स च यश्च तौ ॥ त्यदादितः शेषे पुन्नपुंसकतोलिङ्गवचनानि * ॥ सा च देवदत्तश्च तौ । तच्च देवदत्तश्च यज्ञदत्ता च तानि । पुन्नपुंसकयोस्तु परत्वान्नपुंसकं शिष्यते । तच्च देवदत्तश्च ते ॥ अद्वन्द्वतत्पुरुषविशेषणानामिति वक्तव्यम् * ॥ कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । तच्च सा च अर्धपिप्पल्यौ ते ॥ **ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री । १ । २ । ७३ ॥** एषु सहविवक्षायां स्त्री शिष्यते । पुमान् स्त्रियेत्यस्यापवादः । गाव इमाः । ग्राम्येति किम् । रुरव इमे । पशुग्रहणं किम् । ब्राह्मणाः । संघेषु किम् । एतौ गावौ । अतरुणेषु किम् । वत्सा इमे । अनेकशफेष्विति वाच्यम् * ॥ अश्वा इमे । इह सर्वत्र एकशेषे कृतेऽनेकसुबन्ताभावाद्द्वन्द्वेन । तेन शिरसी शिरांसीत्यादौ समासस्येत्यन्तोदात्तः प्राण्यङ्गत्वादेकवद्भावश्च न । पन्थानौ पन्थान इत्यादौ समासान्तो न ॥ ॥ इत्येकशेषः ॥

कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः । परार्थाभिधानं वृत्तिः । वृत्त्यर्थावबोधकं वाक्यं विग्रहः स द्विविधः । लौकिकोऽलौकिकश्च । परिनिष्ठितत्वात्साधुर्लौकिकः । प्रयोगानर्होऽसाधुरलौकिकः । यथा । राज्ञः पुरुषः । राजन् अस् पुरुष सु इति । अविग्रहो नित्यसमासः । अस्वपदविग्रहो वा । समासश्चतुर्विध इति तु प्रायोवादः। अव्ययीभावतत्पुरुषबहुव्रीहिद्वन्द्वाधिकारबहिर्भूतानामपि सह सुपेति विधानात् । पूर्वपदार्थप्रधानोऽव्ययीभावः । उत्तरपदार्थप्रधानस्तत्पुरुषः । अन्यपदार्थप्रधानो बहुव्रीहिः । उभयपदार्थप्रधानो द्वन्द्वः । इत्यपि प्राचां प्रवादः प्रायोऽभिप्रायः । सूपप्रति उन्मत्तगङ्गमित्याद्यव्ययीभावे अतिमालादौ तत्पुरुषे द्वित्रा इत्यादिबहुव्रीहौ दन्तोष्ठमित्यादिद्वन्द्वे चाभावात् । तत्पुरुषविशेषः कर्मधारयः तद्विशेषो द्विगुः । अनेकपदत्वं द्वन्द्वबहुव्रीह्योरेव । तत्पुरुषस्य क्वचिदेवेत्युक्तम् । किंच ॥ सुपां सुपा तिङा नाम्ना धातुनाथ तिङां तिङा । सुबन्तेनेति विज्ञेयः समासः षड्विधो बुधैः ॥ १ ॥ सुपां सुपा राजपुरुषः । तिङा पर्यभूषत् । नाम्ना कुम्भकारः । धातुना कटप्रूः । अजस्रम् । तिङां तिङा पिबतखादता । खादतमोदता । तिङां सुपा । कृन्तविचक्षणेति यस्यां क्रियायां सा कृन्तविचक्षणा । एहीडादयोऽन्यपदार्थे इति मयूरव्यंसकादौ पाठात्समासः ॥

## ॥ इति सर्वसमासशेषः ॥

**ऋक्पूरब्धूःपथामानक्षे । ५ । ४ । ७४ ॥** अ अनक्षे इति च्छेदः । ऋगाद्यन्तस्य समासस्य अप्रत्ययोऽन्तावयवः स्यात् । अक्षे या धूस्तदन्तस्य तु न । अर्धर्चः । अनृचबह्वृचावध्येतर्येव । नेह अनृक्साम । बह्वृक् सूक्तम् । विष्णोः पूः

विष्णुपुरम् । श्रीपन्नं सोपानम् । विमलापं सरः ॥ इग्वन्तकाममर्गेभ्योऽपरे ।
६ । ३ । ९७ ॥ आदिभि कृतसमासान्तस्यानुकरणम् । समुद्रीं प्रजना । एवं
ईस्यात् । द्विगताआपोऽस्मिन्निति द्वीपम् । अन्तरीपम् । प्रतीपम् । समीप
समापोदेयजनमिति तु समाआपोऽस्मिन्निति योजनम् । कृतसमासान्तम
ह । स्वप् स्वपी ॥ अवर्णान्ताद्वा * ॥ प्रेपम् । परेपम् । प्रापम् । परापम्
ऊदनोर्देशे । ६ । ३ । ९८ ॥ अनोः परस्यापस्य ऊत्स्याद्देशे । अनूपो देशः । ग
पुरा । अक्षे ॥ अक्षापः । द्वन्द्वः । तस्मिन्गोरस्यगोरेदाः ॥ अच् प्रत्यन्व
घपूर्वात्सामलोम्नः । ५ । ४ । ७५ ॥ प्रत्यनुपूर्वात्सामन्लोमान्तात्समासादच् स्यात् ।
प्रतिसामम् । अनुसामम् । अवसामम् । प्रतिलोमम् । अनुलोमम् । अवलोमम् ॥ कृष्णो
दकपाण्डुसंख्यापूर्वायाभूमेरजिष्यते * ॥ कृष्णभूमः । उदग्भूमः । पाण्डुभूमः । ।
प्रासादः ॥ संख्यायानदीगोदावरीभ्यां च * ॥ पञ्चनदम् । सप्तगोदावरम् । अजिति यो
विभागादन्यथापि । पद्मनाभः ॥ अक्ष्णोऽदर्शनात् । ५ । ४ । ७६ ॥ अचक्षुः
पर्यायादक्ष्णोऽच् स्यात्समासान्तः । गवामक्षीव गवाक्षः ॥ अचतुरविचतुरसुचतु
रस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवन
क्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायु
षर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः । ५ । ४ । ७७ ॥ एते
पञ्चविंशतिरजन्तानिपात्यन्ते । आद्यास्त्रयोबहुव्रीहयः । अविद्यमानानि चत्वार्यस्य अच
तुरः । विचतुरः । सुचतुरः ॥ त्र्युपाभ्यां चतुरोऽजिष्यते * ॥ त्रिचतुराः । चतुर्णां
समीपे उपचतुराः । ततएकादश द्वन्द्वाः । स्त्रीपुंसौ । धेन्वनडुहौ । ऋक्सामे । वा
ङ्मनसे । अक्षिणी च भ्रुवौ च अक्षिभ्रुवम् । दाराश्च गावश्च दारगवम् । ऊरू च
अष्ठीवन्तौ च ऊर्वष्ठीवम् । निपातनाट्टिलोपः । पदष्ठीवम् । निपातनात्पादशब्दस्य
पद्भावः । नक्तं च दिवा च नक्तन्दिवम् । रात्रौ च दिवा च रात्रिन्दिवम् । रात्रेर्मा
न्तत्वं निपात्यते । अहनि च दिवा च अहर्दिवम् । वीप्सायां द्वन्द्वोनिपात्यते । अ
न्यहनीत्यर्थः । सरजसमिति साकल्येऽव्ययीभावः । बहुव्रीहौ तु सरजः पङ्कजम् ।
निश्चितं श्रेयोनिःश्रेयसम् । तत्पुरुषएव । नेह । निःश्रेयान् पुरुषः । पुरुषस्यायुः
पुरुषायुषम् । ततोद्विगू । द्व्यायुषम् । त्र्यायुषम् । ततोद्वन्द्वः । ऋग्यजुषम् । ततस्त्र
यः कर्मधारयाः । जातोक्षः । महोक्षः । वृद्धोक्षः । शुनःसमीपं उपशुनम् । टिलोपाभा
वः सम्प्रसारणं च निपात्यते । गोष्ठे श्वा गोष्ठश्वः ॥ ब्रह्महस्तिभ्यां वर्चसः । ५
।४।७८॥ अच् स्यात् । ब्रह्मवर्चसम् । हस्तिवर्चसम् ॥ पल्यराजभ्यां चेति वक्तव्यम् * ॥
... । राजवर्चसम् ॥ अवसमन्धेभ्यस्तमसः । ५ । ४ । ७९ ॥ अवतम
सम् । संतमसम् । अन्धयतीत्यन्धं पचाद्यच् । अन्धं तमः अन्धतमसम् ॥ श्वसो

हृदयम् । हृदयस्येदं हार्दम् । हृल्लासः । लेखेत्यणन्तस्य ग्रहणम् । यति तु हृदय
लेखग्रहणमेव ज्ञापकं उत्तरपदाधिकारे तदन्तविधिर्नास्तीति ॥ **वा शोकष्य**
**गेषु । ६ । ३ । ५१ ॥** हृच्छोकः । हृदयशोकः । सौहार्द्यम् । सौहृदय्य
द्रोगः । हृदयरोगः । हृदयशब्दपर्यायो हृच्छब्दोऽप्यस्ति । तेन सिद्धे प्राय
यम् ॥ **पादस्य पदाज्यातिगोपहतेषु । ६ । ३ । ५२ ॥** एषु
पादस्य पदादेशः स्यात् । पादाभ्यामजतीति पदाजिः । पदातिः ।
तिभ्यां पादे चेति णिन् प्रत्ययः । अजेर्व्यभावो निपातनात् । पदगः । पदोप
**पद्यत्यतदर्थे । ६ । ३ । ५३ ॥** पादस्य पत्स्यादतदर्थे यति परे । पादौ वि
पद्याः शर्कराः । अतदर्थे किम् । पादार्थमुदकं पाद्यम् । पादार्घाभ्यां चेति यत्
चरतावुपसंख्यानम् * ॥ पादाभ्यां चरति पदिकः । पर्पादित्वात् ष्ठन् ॥ **हि**
**पिहतिषु च । ६ । ३ । ५४ ॥** पद्धिमम् । पत्काषी । पद्धतिः ॥ **ऋचः शे**
**३ । ५५ ॥** ऋचः पादस्य पत्स्याच्छे परे । गायत्र्यी पच्छः शंसति । पादंपाद
र्थः । ऋचः किम् । पादशः कार्षापणं ददाति ॥ **वा घोषमिश्रशब्देषु । ६ ।**
**५६ ॥** पादस्य पत् । पद्घोषः । पादघोषः । पन्मिश्रः । पादमिश्रः । पच्छब्दः । पा
शब्दः ॥ निष्के चेति वाच्यम् * ॥ पन्निष्कः । पादनिष्कः ॥ **उदकस्योदः सं**
**याम् । ६ । ३ । ५७ ॥** उदमेघः ॥ उत्तरपदस्य चेति वक्तव्यम् * ॥ क्षीरोद
**पेषंवासवाहनधिषु च । ६ । ३ । ५८ ॥** उदपेषंपिनष्टि । उदवासः । उद
नः । उदधिर्घटः । समुद्रे तु पूर्वेण सिद्धम् ॥ **एकहलादौ पूरयितव्येऽन्यत**
**स्याम् । ६ । ३ । ५९ ॥** उदकुम्भः । उदककुम्भः । एकेति किम् । उदकस्थाल
पूरयितव्येति किम् । उदकपर्वतः ॥ **मन्थौदनसक्तुबिन्दुवज्रभारहारवीव**
**गाहेषु च । ६ । ३ । ६० ॥** उदमन्थः । उदकमन्थः । उदौदनः । उदकौदनः
**इको ह्रस्वोऽङ्यो गालवस्य । ६ । ३ । ६१ ॥** इगन्तस्याङ्यन्तस्य ह्रस्व
स्यादुत्तरपदे । ग्रामणिपुत्रः । ग्रामणीपुत्रः । इकः किम् । रमापतिः । अङ्य इति
म् । गौरीपतिः । गालवग्रहणं पूजार्थम् । अन्यतरस्यामित्यनुवृत्तेः ॥ इयङुवङ्भावि
मव्ययानां च नेति वाच्यम् * ॥ श्रीमदः । भ्रूभङ्गः । शुक्लीभावः ॥ अभ्रुकुंसादीनां
ति वक्तव्यम् * ॥ भ्रूकुंसः । भ्रूकुटिः । भ्रूकुंसः । भ्रूकुटिः । अकारोऽनेन विधी
इति व्याख्यान्तरम् ॥ भ्रुकुंसः । भ्रुकुटिः । भ्रुवा कुंसो भाषणं शोभा वा यस्य सः स्
वेषधारी नर्तकः । भ्रुवः कुटिः कौटिल्यम् ॥ **एकतद्धिते च । ६ । ३ । ६२**
एकशब्दस्य ह्रस्वः स्यात्तद्धिते उत्तरपदे च । एकस्या आगतं एकरूप्यम् । एकक्षीरम्
**ङ्यापोः संज्ञाच्छन्दसोर्बहुलम् । ६ । ३ । ६३ ॥** रेवतिपुत्रः । अजक्षीरम्
**त्वे च । ६ । ३ । ६४ ॥** त्वप्रत्यये ङ्यापोर्वा ह्रस्वः । अजत्वम् । अजात्वम् ।

हिणित्वम् । रोहिणीत्वम् ॥ **ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे** । ६ । १ । १३ ॥ ष्यङन्तस्य पूर्वपदस्य संप्रसारणं स्यात्पुत्रपत्योरुत्तरपदयोस्तत्पुरुषे ॥ **संप्रसारणस्य** । ६ । ३ । १३९ ॥ संप्रसारणस्य दीर्घः स्यादुत्तरपदे । कौमुदगन्ध्यायाः पुत्रः कौमुदगन्धीपुत्रः । कौमुदगन्धीपतिः । व्यवस्थितविभाषया ह्रस्वो न । स्त्रीप्रत्यये चानुपसर्जनेनेति तदादिनियमप्रतिषेधात् । परमकारीषगन्धीपुत्रः । उपसर्जने तु तदादिनियमान्नेह । अतिकारीषगन्ध्यापुत्रः ॥ **बन्धुनि बहुव्रीहौ** । ६ । १ । १४ ॥ बन्धुशब्दे उत्तरपदे ष्यङः संप्रसारणं स्याद्बहुव्रीहौ । कारीषगन्ध्या बन्धुरस्येति कारीषगन्धीबन्धुः । बहुव्रीहाविति किम् । कारीषगन्ध्याया बन्धुः कारीषगन्ध्याबन्धुः । ङीपनिर्देशस्तु शब्दस्वरूपापेक्षया ॥ मातच्मातृकमातृषु वा * ॥ कारीषगन्धीमातः । कारीषगन्ध्यामातः । कारीषगन्धीमातृकः । कारीषगन्ध्यामातृकः । कारीषगन्धीमाता । कारीषगन्ध्यामाता । अस्मादेव निपातनान्मातृशब्दस्य मातजादेशः कप्विकल्पश्च । बहुव्रीहावेवेदम् । नेह । कारीषगन्ध्याया माता कारीषगन्ध्यामाता । चित्स्वरसामर्थ्यात्सित्स्वरो बहुव्रीहिस्वरं बाधते ॥ **इष्टकेषीकामालानां चिततूलभारिषु** । ६ । ३ । ६५ ॥ इष्टकादीनां तदन्तानां च पूर्वपदानां चितादिषु क्रमादुत्तरपदेषु ह्रस्वः स्यात् । इष्टकचितम् । पक्वेष्टकचितम् । इषीकतूलम् । मुञ्जेषीकतूलम् । मालभारि । उत्पलमालभारि ॥ **कारे सत्यागदस्य** । ६ । ३ । ७० ॥ मुम् स्यात् । सत्यङ्कारः । अगदङ्कारः ॥ अस्तोश्चेति वक्तव्यम् * ॥ अस्तुङ्कारः ॥ धेनोर्भव्यायाम् * ॥ धेनुम्भव्या ॥ लोकस्य पृणे * ॥ लोकम्पृणः । पृणातीति मूलविभुजादित्वात्कः ॥ इत्येऽनभ्याशस्य * ॥ अनभ्याशमित्यः । दूरतः परिहर्तव्य इत्यर्थः ॥ भ्राष्ट्राग्न्योरिन्धे * ॥ भ्राष्ट्रमिन्धः । अग्निमिन्धः ॥ गिलेऽगिलस्य * ॥ तिमिङ्गिलः । अगिलस्य किम् । गिलगिलः ॥ गिलगिले च * ॥ तिमिङ्गिलगिलः ॥ उष्णभद्रयोः करणे * ॥ उष्णङ्करणम् । भद्रङ्करणम् ॥ **रात्रेः कृति विभाषा** । ६ । ३ । ७२ ॥ रात्रिञ्चरः । रात्रिचरः । रात्रिमटः । रात्र्यटः । अखिदर्थमिदं सूत्रम् । खिति तु अरुर्द्विषदिति नित्यमेव वक्ष्यते । रात्रिम्मन्यः ॥ **सहस्य सः संज्ञायाम्** । ६ । ३ । ७८ ॥ उत्तरपदे । सपलाशम् । संज्ञायां किम् । सहयुध्वा ॥ **ग्रन्थान्ताधिके च** । ६ । ३ । ७९ ॥ अनयोः परयोः सहस्य सः स्यादुत्तरपदे । समुहूर्तं ज्योतिषमधीते । सद्रोणा खारी ॥ **द्वितीये चानुपाख्ये** । ६ । ३ । ८० ॥ अनुमेये द्वितीये सहस्य सः स्यात् । सराक्षसीका निशा । राक्षसी मायादनुमीयमाना निशायामनुमीयते । **समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु** । ६ । ३ । ८४ ॥ समानस्य सः स्यादुत्तरपदे न तु मूर्धादिषु । अनु भ्राता सगर्भ्यः । अनु सखा सयूथ्यः । योनः सनुत्यः । अत्र समानार्थे सगर्भसयूथसनुताद्यत् । अमूर्धादिषु किम् । समानमूर्धा । समानप्रभृतयः । समानोदर्काः । समान-

हृद्यम् । हृदयस्येदं हार्दम् । हृल्लासः । लेखेत्यणन्तस्य ग्रहणम् । घञि तु हृदयलेखः । लेखग्रहणमेव ज्ञापकं उत्तरपदाधिकारे तदन्तविधिर्नास्तीति ॥ **वा शोकष्यञ्रोगेषु** । ६ । ३ । ५१ ॥ हृच्छोकः । हृदयशोकः । सौहार्द्यम् । सौहृदय्यम् । हृद्रोगः । हृदयरोगः । हृदयशब्दपर्यायो हृच्छब्दोऽप्यस्ति । तेन सिद्धे प्रपञ्चार्थमिदम् ॥ **पादस्य पदाज्यातिगोपहतेषु** । ६ । ३ । ५२ ॥ एषूत्तरपदेषु पादस्य पद इत्यकारान्त आदेशः स्यात् । पादाभ्यामजतीति पदाजिः । पदातिः । अजतिभ्यां पादे चेतीण् प्रत्ययः । अजेर्व्यभावो निपातनात् । पदगः । पदोपहतः ॥ **पद्यत्यतदर्थे** । ६ । ३ । ५३ ॥ पादस्य पत्स्याद्यति अतदर्थे परे । पादौ विध्यन्ति पद्याः शर्कराः । अतदर्थे किम् । पादार्थमुदकं पाद्यम् । पादार्घाभ्यां चेति यत् ॥ इके चरतावुपसंख्यानम् * ॥ पादाभ्यां चरति पदिकः । पर्पादिभ्यः ष्ठन् ॥ **हिमकाषिहतिषु च** । ६ । ३ । ५४ ॥ पद्धिमम् । पत्काषी । पद्धतिः ॥ **ऋचः शे** । ६ । ३ । ५५ ॥ ऋचः पादस्य पत्स्याच्छे परे । गायत्र्या पच्छः शंसति । पादंपादमित्यर्थः । ऋचः किम् । पादशः कार्षापणं ददाति ॥ **वा घोषमिश्रशब्देषु** । ६ । ३ । ५६ ॥ पादस्य पत् । पद्घोषः । पादघोषः । पन्मिश्रः । पादमिश्रः । पच्छब्दः । पादशब्दः ॥ निष्के चेति वाच्यम् * ॥ पन्निष्कः । पादनिष्कः ॥ **उदकस्योदः संज्ञायाम्** । ६ । ३ । ५७ ॥ उदमेघः ॥ उत्तरपदस्य चेति वक्तव्यम् * ॥ क्षीरोदः ॥ **पेषंवासवाहनधिषु च** । ६ । ३ । ५८ ॥ उदपेषं पिनष्टि । उदवासः । उदवाहनः । उदधिर्घटः । समुद्रे तु पूर्वेण सिद्धम् ॥ **एकहलादौ पूरयितव्येऽन्यतरस्याम्** । ६ । ३ । ५९ ॥ उदकुम्भः । उदककुम्भः । एकेति किम् । उदकस्थाली । पूरयितव्येति किम् । उदकपर्वतः ॥ **मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च** । ६ । ३ । ६० ॥ उदमन्थः । उदकमन्थः । उदौदनः । उदकौदनः ॥ **इको ह्रस्वोऽङ्यो गालवस्य** । ६ । ३ । ६१ ॥ इगन्तस्याङ्यन्तस्य ह्रस्वो वा स्यादुत्तरपदे । ग्रामणिपुत्रः । ग्रामणीपुत्रः । इकः किम् । रमापतिः । अङ्य इति किम् । गौरीपतिः । गालवग्रहणं पूजार्थम् । अन्यतरस्यामित्यनुवृत्तेः ॥ इयङुवङ्भाविनामव्ययानां च नेति वाच्यम् * ॥ श्रीमदः । भ्रूभङ्गः । शुक्लीभावः ॥ भ्रुकुंसादीनामिति वक्तव्यम् * ॥ भ्रुकुंसः । भ्रुकुटिः । भ्रूकुंसः । भ्रूकुटिः । अकारोऽनेन विधीयत इति व्याख्यान्तरम् ॥ भ्रुकुंसः । भ्रुकुटिः । भ्रुवा कुंसो भाषणं शोभा वा यस्य सः स्त्रीवेषधारी नर्तकः । भ्रुवः कुटिः कौटिल्यम् ॥ **एक तद्धिते च** । ६ । ३ । ६२ ॥ एकशब्दस्य ह्रस्वः स्यात्तद्धिते उत्तरपदे च । एकस्या आगतं एकरूप्यम् । एकक्षीरम् ॥ **ङ्यापोः संज्ञाछन्दसोर्बहुलम्** । ६ । ३ । ६३ ॥ रेवतिपुत्रः । अजक्षीरम् ॥ **त्वे च** । ६ । ३ । ६४ ॥ त्वप्रत्यये ङ्यापोर्वा ह्रस्वः । अजत्वम् । अजात्वम् । रो-

हिणित्वम् । रोहिणीत्वम् ॥ **ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे** ।६।१।१३॥ ष्यङन्तस्य पूर्वपदस्य संप्रसारणं स्यात्पुत्रपत्योरुत्तरपदयोस्तत्पुरुषे ॥ **संप्रसारणस्य** । ६ । ३ । १३९ ॥ संप्रसारणस्य दीर्घः स्यादुत्तरपदे । कौमुदगन्ध्यायाः पुत्रः कौमुदगन्धीपुत्रः । कौमुदगन्धीपतिः । व्यवस्थितविभाषया ह्रस्वो न । ष्यप्रत्यये चानुपसर्जनेनेति तदादिनियमप्रतिषेधात् । परमकारीषगन्धीपुत्रः । उपसर्जने तु तदादिनियमान्नेह । अतिकारीषगन्ध्यापुत्रः ॥ **बन्धुनि बहुव्रीहौ** । ६ । १ । १४ ॥ बन्धुशब्दे उत्तरपदे ष्यङः संप्रसारणं स्याद्बहुव्रीहौ । कारीषगन्ध्या बन्धुरस्येति कारीषगन्धीबन्धुः । बहुव्रीहाविति किम् । कारीषगन्ध्याया बन्धुः कारीषगन्ध्याबन्धुः । ङीयनिर्देशस्तु स्वरूपापेक्षया ॥ मातच्मातृकमातृषु वा * ॥ कारीषगन्धीमातः । कारीषगन्ध्यामातः । कारीषगन्धीमातृकः । कारीषगन्ध्यामातृकः । कारीषगन्धीमाता । कारीषगन्ध्यामाता । अस्मादेव निपातनान्मातृशब्दस्य मातजादेशः कब्विकल्पश्च । बहुव्रीहावेवेदम् । नेह । कारीषगन्ध्याया माता कारीषगन्ध्यामाता । विग्रहसामर्थ्याद्विरोधो बहुव्रीहित्वं बाधते ॥ **इष्टकेषीकामालानां चिततूलभारिषु** । ६ । ३ । ६५ ॥ इष्टकादीनां तदन्तानां च पूर्वपदानां चितादिषु क्रमादुत्तरपदेषु ह्रस्वः स्यात् । इष्टकचितम् । पक्वेष्टकचितम् । इषीकतूलम् । मुञ्जेषीकतूलम् । मालभारि । उत्पलमालभारि ॥ **कारे सत्यागदस्य** । ६ । ३ । ७० ॥ मुम् स्यात् । सत्यङ्कारः । अगदङ्कारः ॥ अस्तोश्चेति वक्तव्यम् * ॥ अस्तुङ्कारः ॥ धेनोर्भव्यायाम् * ॥ धेनुम्भव्या ॥ लोकस्य पृणे * ॥ लोकम्पृणः । पृणातेः मूलविभुजादित्वात्कः ॥ इत्येऽनभ्याशस्य * ॥ अनभ्याशमित्यः । दूरतः परिहर्तव्य इत्यर्थः ॥ भ्राष्ट्राग्न्योरिन्धे * ॥ भ्राष्ट्रमिन्धः । अग्निमिन्धः ॥ गिलेऽगिलस्य * ॥ तिमिङ्गिलः । अगिलस्य किम् । गिलगिलः ॥ गिलगिले च * ॥ तिमिङ्गिलगिलः ॥ उष्णभद्रयोः करणे * ॥ उष्णङ्करणम् । भद्रङ्करणम् ॥ **रात्रेः कृति विभाषा** । ६ । ३ । ७२ ॥ रात्रिञ्चरः । रात्रिचरः । रात्रिमटः । रात्र्यटः । अखिदर्थमिदं सूत्रम् । खिति तु अरुर्द्विषदिति नित्यमेव वक्ष्यते । रात्रिम्मन्यः ॥ **सहस्य सः संज्ञायाम्** । ६ । ३ । ७८ ॥ उत्तरपदे । साश्वत्थम् । संज्ञायां किम् । सहयुध्वा ॥ **ग्रन्थान्ताधिके च** । ६ । ३ । ७९ ॥ अनयोः परयोः सहस्य सः स्यादुत्तरपदे । समुहूर्तं ज्योतिषमधीते । सद्रोणा खारी ॥ **द्वितीये चानुपाख्ये** । ६ । ३ । ८० ॥ अनुमेये द्वितीये सहस्य सः स्यात् । सराक्षसिका निशा । राक्षसाः साक्षादनुपलभ्यमाना निशयानुमीयन्ते । **समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु** । ६ । ३ । ८४ ॥ समानस्य सः स्यादुत्तरपदे न तु मूर्धादिषु । अनु भ्राता सगर्भ्यः । अनु सखा सयूथ्यः । यो नः सनुत्यः । अत्र भवार्थे सगर्भसयूथसनुताद्यन् । अमूर्धादिषु किम् । समानमूर्धा । समानप्रभृतयः । समानोदर्काः । समान-

क्षीरादिषु परेषु। अन्यदाशीः। अन्यदाशा। अन्यदास्था। अन्यदास्थितः। अन्यदुत्सुकः। अन्यदूतिः। अन्यद्रागः। अन्यदीयः। अषष्ठीत्यादि किम्। अन्यस्याऽन्येन वाशीः। अन्याशीः। कारके छे च नायं निषेधः। अन्यस्य कारकः अन्यत्कारकः। अन्यधायमन्यदीयादेराकृतिगणत्वाच्छः॥ अर्थे विभाषा। ६। ३। १००॥ अन्यदर्थः। अ-
:॥ कोः कत्तत्पुरुषेऽचि। ६। ३। १०१॥ अजादावुत्तरपदे। कुत्सितोऽश्वः। कदश्वः। कदन्नम्। तत्पुरुषे किम्। कूष्ट्रोराजा॥ त्रौ च *॥ कुत्सितास्त्रयः कत्रयः॥
रथवदयोश्च। ६। ३। १०२॥ कद्रथः। कद्वदः॥ तृणे च जातौ। ६।३।१०३॥
म्॥ का पथ्यक्षयोः। ६। ३। १०४॥ कापथम्। काक्षः। अक्षशब्देन
ः। अक्षिशब्देन बहुव्रीहिर्वा॥ ईषदर्थे। ६। ३। १०५॥ ईषज्जलं काज-
। अजादावपि परत्वात्कादेशः। काम्लः॥ विभाषा पुरुषे। ६। ३। १०६॥
रुषः। कुपुरुषः। अप्राप्तविभाषेयम्। ईषदर्थे हि पूर्वविप्रतिषेधान्नित्यमेव। ईष-
ः। कापुरुषः॥ कवं चोष्णे।६।३।१०७॥ उष्णशब्दे उत्तरपदे कोः कवं का
स्यात्। कवोष्णम्। कोष्णम्। कदुष्णम्॥ पृषोदरादीनि यथोपदिष्टम्
। ३। १०९॥ पृषोदरप्रकाराणि शिष्टैर्यथोच्चारितानि तथैव साधूनि स्युः। पृ-
उदरं पृषोदरम्। तलोपः। वारिवाहकोबलाहकः। पूर्वपदस्य बः उत्तरपदादेश्च
म्॥ भवेद्वर्णागमाद्धंसः सिंहोवर्णविपर्ययात्। गूढोत्मा वर्णविकृतेर्वर्णनाशात्पृषोद-
॥ १॥ दिक्शब्देभ्यस्तीरस्य तारभावोवा *॥ दक्षिणतारम्। दक्षिणतीरम्।
रतारम्। उत्तरतीरम्॥ दुरोदाशनाशदभध्येषूत्वमुत्तरपदादेः ष्टुत्वं च *॥ दुःखेन
यते दूडाशः। दुःखेन नाश्यते दूणाशः। दुःखेन दभ्यते दूडभः। खल् प्रत्ययः।
र्नलोपोनिपात्यते। दुःखेन ध्यायतीति दूढ्यः। आतश्चेति कः। भुवन्त्योऽस्यां सीद-
ति वृसी। भुवच्छब्दस्य वृ आदेशः। सदेरधिकरणे ड्। आकृतिगणोऽयम्॥
हितायाम्। ६। ३। ११४॥ अधिकारोऽयम्॥ कर्णे लक्षणस्याऽविष्टाष्टप-
मणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य। ६। ३। ११५॥ कर्णशब्दे परे
लक्षणवाचकस्य दीर्घः। द्विगुणाकर्णः। लक्षणस्य किम्। शोभनकर्णः। अविष्टादीनां
म्। विष्टकर्णः। अष्टकर्णः। पञ्चकर्णः। मणिकर्णः। भिन्नकर्णः। छिन्नकर्णः।
छिद्रकर्णः। स्रुवकर्णः। स्वस्तिककर्णः॥ नहिवृतिवृषिव्यधिरुचिसहितनिषु
। ६।३।११६॥ क्विबन्तेषु एषु परेषु पूर्वपदस्य दीर्घः। उपानत्। नीवृत्। प्रावृट्।
मीवित्। नीरुक्। अभीरुक्। ऋतीषट्। परीतत्। क्वाविति किम्। परिणहनम्।
विभाषा पुरुषदत्तनोमण्डूकप्लुता विभागानुवर्तते सा च व्यवस्थिता। तेन गतिका-

१ पृषोदर, पृषोद्यान, बलाहक, जीमूत, श्मशान, उलूखल, पिशाच, वृसी, मयूर। इति पृषोदरादि-
गणः।

रुकर्णेरेव । नेह । पटुरुक् । तिग्मरुक् ॥ **वनगिर्योः संज्ञायां कोटरकिंशु**
**कादीनाम्** । ६ । ३ । ११७ ॥ कोटरादीनां वने परे किंशुलुकादीनां गिरौ
दीर्घः स्यात्संज्ञायाम् ॥ **वनं पुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्**
**८ । ४ । ४** ॥ वनशब्दस्योत्तरपदस्य एभ्यएव णत्वं नान्येभ्यः । इह कोटरा
पञ्च दीर्घविधौ कोटरादयोबोध्याः । तेषां कृतदीर्घाणां णत्वविधौ निर्देशोनियमार्थ
अग्रेशब्दस्य तु विध्यर्थः । पुरगावणम् । मिश्रकावणम् । सिध्रकावणम् । सारि
वणम् । कोटरावणम् । एभ्यएवेति किम् । असिपत्रवनम् । वनस्याग्रे अग्रेवण
राजदन्तादिषु निपातनात्सप्तम्याअलुक् । प्रातिपदिकार्थमात्रे प्रथमा । किंशुलुकागिरिः
**वले** । ६ । ३ । ११८ ॥ वलप्रत्यये परे दीर्घः स्यात्संज्ञायाम् । कृषीवलः ॥ म
**वह्वचोऽनजिरादीनाम्** । ६ । ३ । ११९ ॥ अमरावती । अनजिरादीनां कि
अजिरवती । वह्वचः किम् । व्रीहिमती । संज्ञायामित्येव । नेह । वलयवती ॥ श
**दीनां च** । ६ । ३ । १२० ॥ शरावती ॥ **इकोवहेऽपीलोः** । ६ । ३ । १२
इगन्तस्य दीर्घः स्याद्वहे । ऋषीवहम् । कपीवहम् । इकः किम् । पिण्डवहम् । अ
लोः किम् । पीलुवहम् ॥ अपील्वादीनामिति वाच्यम् * ॥ दारुवहम् ॥ **उपसर्ग**
**घञ्यमनुष्ये बहुलम्** । ६ । ३ । १२२ ॥ उपसर्गस्य बहुलं दीर्घः स्याद्घ
परे नतु मनुष्ये । परीपाकः । परिपाकः । अमनुष्ये किम् । निषादः ॥ **इकः का**
। ६ । ३ । १२३ ॥ इगन्तस्योपसर्गस्य दीर्घः स्यात्काशे । वीकाशः । नीकाश
इकः किम् । प्रकाशः ॥ **अष्टनः संज्ञायाम्** । ६ । ३ । १२५ ॥ उत्तरपदे दीर्घ
अष्टापदम् । संज्ञायां किम् । अष्टपुत्रः ॥ **चितेः कपि** । ६ । ३ । १२७ ॥ प
चितीकः ॥ **नरे संज्ञायाम्** । ६ । ३ ।१२९ ॥ विश्वानरः ॥ **मित्रे चर्षौ** । ६
। ३ । १३० ॥ विश्वामित्रः । ऋषौ किम् । विश्वमित्रोमाणवकः ॥ शुनोदन्तदं
कर्णकुन्दवराहपुच्छपदेषु दीर्घोवाच्यः * ॥ श्वादन्तः । इत्यादि । **प्रनिरन्तः श**
**कुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि** । ८ । ४ । ५ ॥ एभ्

१ कोटर, मिश्रक, सिध्रक, पुरग, शारिक । इति कोटरादिः ।
२ किंशुलुक, शाल्व, नड, अञ्जन, भञ्जन, लोहित, कुक्कुट । इति किंशुलुकादिः ।
३ अजिर, खदिर, पुलिन, हंस, कारण्डव, चक्रवाक । इत्यजिरादिः ।
४ शर, वंश, धूम, अहि, कपि, मणि, मुनि, शुचि, हनु । इति शरादिः ।
५ [illegible] ।
६ [illegible] * । [illegible] । [illegible] । [illegible] । [illegible] * । [illegible] । [illegible] । [illegible] । [illegible] । [illegible] * । [illegible] । [illegible] । [illegible] । [illegible] । [illegible] ।
७ [illegible] ।

। १४५ ॥ सुट् सस्य षत्वं च निपात्यते । गावः पद्यन्तेऽस्मिन्देशे स गोभिः सेवितो गोष्पदः । असेविते । अगोष्पदान्यरण्यानि । प्रमाणे । गोष्पदमात्रं क्षेत्रम् । सेवितेत्यादि किम् । गोः पदं गोपदम् ॥ **आस्पदं प्रतिष्ठायाम्** । ६ । १ । १४६ ॥ आत्मयापनाय स्थाने सुट् निपात्यते । आस्पदम् । प्रेति किम् । आपदापदम् ॥ **आश्चर्यमनित्ये** । ६ । १ । १४७ ॥ अद्भुते सुट् । आश्चर्यं यदि स भुञ्जीत । अनित्ये किम् । आचर्यं कर्म शोभनम् ॥ **वर्चस्केऽवस्करः** । ६ । १ । १४८ ॥ कुत्सितं वर्चः वर्चस्कमन्नमलं तस्मिन् सुट् । अवकीर्यत इत्यवस्करः । वर्चस्के किम् । अवकरः ॥ **अपस्करो रथाङ्गम्** । ६ । १ । १४९ ॥ अपकरोऽन्यः ॥ **विष्किरः शकुनिर्विकिरो वा** । ६ । १ । १५० ॥ पक्षे विकिरः । वावचनेनैव सुड्विकल्पे सिद्धे विकिरग्रहणं तस्यापि शकुनेरन्यत्र प्रयोगो माभूदिति वृत्तिस्तत्र भाष्यविरोधात् ॥ **प्रतिष्कशश्च कशेः** । ६ । १ । १५२ ॥ कश गतिशासनयोरित्यस्य प्रतिपूर्वस्य पचाद्यचि सुट् निपात्यते षत्वं च । सहायः पुरोयायी वा प्रतिष्कश इत्युच्यते । कशेः किम् । प्रतिगतः कशां प्रतिकशोऽश्वः । यद्यपि कशेरेव कशा तथापि कशेरिति धातोर्ग्रहणमुपसर्गस्य प्रतेर्ग्रहणार्थम् । तेन धात्वन्तरोपसर्गान्न । **प्रस्कण्वहरिश्चन्द्रावृषी** । ६ । १ । १५३ ॥ हरिश्चन्द्रग्रहणमनार्षार्थम् । ऋषी इति किम् । प्रकण्वो देशः । हरिचन्द्रो माणवकः ॥ **मस्करमस्करिणौ वेणुपरिव्राजकयोः** । ६ । १ । १५४ ॥ मकरशब्दोऽव्युत्पन्नस्तस्य सुडिनिश्च निपात्यते । वेण्विति किम् । मकरो ग्राहः । मकरी समुद्रः ॥ **कास्तीराजस्तुन्दे नगरे** । ६ । १ । १५५ ॥ ईषत्तीरमस्यास्तीति कास्तीरं नाम नगरम् । अजस्येव तुन्दमस्येति अजस्तुन्दं नाम नगरम् । नगरे किम् । कातीरम् । अजतुन्दम् ॥ **कारस्करो वृक्षः** । ६ । १ । १५६ ॥ कारं करोतीति कारस्करो वृक्षः । अन्यत्र कारकरः । केचित्तु पारस्कारादिष्विदं पठन्ति न सूत्रेषु ॥ **पारस्करप्रभृतीनि च संज्ञायाम्** । ६ । १ । १५७ ॥ एतानि ससुट्कानि निपात्यन्ते नाम्नि । पारस्करः । किष्किन्धा । तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च * ॥ तत्पूर्वं वर्णेन दकारलोपोऽस्य: तद्बृहतोरिकार-णकारौ लुप्येते । करपत्योस्तु सुट् । चोरदेवतयोरिति समुदायोपाधिः । तस्करः । बृहस्पतिः ॥ प्रायस्य चित्तिचित्तयोः * ॥ प्रायश्चित्तिः प्रायश्चित्तम् । [illegible] । आकृतिगणोऽयम् ॥

**॥ इति समासाश्रयविधयः ॥**

**समर्थानां प्रथमाद्वा ॥ ४ । १ । ८२ ॥** इदं पदत्रयमधिक्रियते । प्राग्दिश इतियावत् । सामर्थ्यं परिनिष्ठितत्वम् । कृतसंधिकार्यत्वमिति यावत् ॥ **प्राग्दीव्यतोऽण् ॥ ४ । १ । ८३ ॥** तेन दीव्यतीत्यतः प्रागणधिक्रियते ॥ **अश्वपत्यादिभ्यश्च[1] ॥ ४ । १ । ८४ ॥** एभ्योऽण् स्यात् प्राग्दीव्यतीयेष्वर्थेषु । वक्ष्यमाणस्य ण्यस्यापवादः ॥ **तद्धितेष्वचामादेः ॥ ७ । २ । ११७ ॥** ञिति णिति च तद्धिते परेऽचामादेरचो वृद्धिः स्यात् ॥ **किति च ॥ ७ । २ । ११८ ॥** किति तद्धिते च तथा । अश्वपतेरपत्यादि आश्वपतम् । गाणपतम् । गाणपत्यो मन्त्र इति तु प्रामादिकमेव ॥ **दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ॥ ४ । १ । ८५ ॥** दित्यादिभ्यः पत्युत्तरपदाच्च प्राग्दीव्यतीयेष्वर्थेषु ण्यः स्यादणोऽपवादः । दैत्यः । अदितेरादित्यस्य वा आदित्यः । प्राजापत्यः ॥ यमाच्चेति काशिकायाम् * ॥ याम्यः ॥ पृथिव्या ञाञौ * ॥ पार्थिवः । पार्थिवी ॥ देवाद्यञञौ * ॥ दैव्यम् । दैवम् ॥ बहिषष्टिलोपो यञ्च * ॥ बाह्यः ॥ ईकक्च * ॥ बाहीकः ॥ स्थाम्नोऽकारः * ॥ अश्वत्थामः । पृषोदरादित्वात्सस्य तः ॥ भवार्थे तु लुग्वाच्यः * ॥ अश्वत्थामा ॥ लोम्नोऽपत्येषु बहुष्वकारः * ॥ बाह्वादीञोऽपवादः । उडुलोमाः । उडुलोमान् । बहुषु किम् । औडुलोमिः । गोरजादिप्रसङ्गे यत् * ॥ गव्यम् । अजादिप्रसङ्गे किम् । गोभ्यो हेतुभ्य आगतं गोरूप्यम् । गोमयम् ॥ **उत्सादिभ्योऽञ्[2] ॥ ४ । १ । ८६ ॥** औत्सः । अग्निकलिभ्यां ढग्वक्तव्यः * ॥ अग्नेरपत्यादि आग्नेयम् । कालेयम् ॥

**॥ इत्यपत्यादिविकारान्तार्थसाधारणाः प्रत्ययाः ॥**

**स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ॥ ४ । १ । ८७ ॥** धान्यानां भवनइत्यतः प्रागर्थेषु स्त्रीपुंसाभ्यां क्रमान्नञ्स्नञौ स्तः । स्त्रैणः । पौंस्नः । वत्यर्थे न । स्त्रीपुंवच्चेति ज्ञापकात् । स्त्रीवत् । पुंवत् ॥ **द्विगोर्लुगनपत्ये ॥ ४ । १ । ८८ ॥** द्विगोर्निमित्तं यस्तद्धितोऽजादिरनपत्यार्थः प्राग्दीव्यतीयस्तस्य लुक् स्यात् । पञ्चसु कपालेषु संस्कृतः पुरोडाशः पञ्चकपालः । द्विगोर्निमित्तस्येति किम् । पञ्चकपालस्येदं खण्डं पाञ्चकपालम् । अजादिः किम् । पञ्चगर्गरूप्यम् । अनपत्ये किम् । द्वयोर्मित्रयोरपत्यं द्वैमित्रिः ॥ **गोत्रेऽलुगचि ॥ ४ । १ । ८९ ॥** अजादौ प्राग्दीव्यतीये विवक्षिते गोत्रप्रत्ययस्यालुक् स्यात् । गर्गाणां छात्राः । वृद्धाच्छः ॥ **आपत्यस्य च तद्धितेऽनाति ।**

---

1 अश्वपति, स्थानपति, ज्ञानपति, यज्ञपति, बन्धुपति, शतपति, धनपति, गणपति, राष्ट्रपति, कुलपति, गृहपति, पशुपति, धान्यपति, धर्मपति, धन्वपति, सभापति, प्राणपति, क्षेत्रपति । इत्यश्वपत्यादिः ।

2 उत्स, उदपान, विकर, विनद, महानद, महानस, महाप्राण, तरुण, तलुन, बष्कयासे, धेनु, पृथिवी, पङ्क्ति, जगती, त्रिष्टुप्, अनुष्टुप्, जनपद, भरत, उशीनर, ग्रीष्म, पीलु, कुल, उदस्थान, देश, पृषदंश, भल्लकीय, रथन्तर, मध्यन्दिन, बृहत्, महत्, सत्वत्, कुरु, पञ्चाल, इन्द्रावसान, उष्णिह्, ककुभ्, सुवर्ण, देव । ग्रीष्मादच्छन्दसि इत्युत्सादिः ।

। १ । १६२ ॥ वश्य पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि
संज्ञमेव न गोत्रसंज्ञम् ॥ **भ्रातरि च ज्यायसि । ४ । १ । १६४ ॥** ज्येष्ठे
रे जीवति कनीयान् चतुर्थादिर्युवा स्यात् ॥ **वान्यस्मिन्सपिण्डे स्थविरत-**
**रेजीवति । ४ । १ । १६५ ॥** भ्रातुरन्यस्मिन्सपिण्डे स्थविरतरे जीवति पौत्रप्रभृ-
जीवदेव युवसंज्ञं वा स्यात् । एवं जीवतिग्रहणमपत्यस्य विशेषणम् । द्वितीयं
स्य । तरबुनिर्देशादुभयोरुत्कर्षार्थः । स्थानेन वयसा चोत्कृष्टे पितृव्ये माता-
ातरि वा जीवति । गार्ग्यस्यापत्यं गार्ग्यायणः । गार्ग्यो वा । स्थविरेति किम् ।
योन्यूने गार्ग्य एव । जीवतीति किम् । मृते मृतो वा गार्ग्य एव ॥ वृद्धस्य च
मिति वाच्यम् * ॥ गोत्रस्यैव वृद्धसंज्ञा प्राचाम् । गोत्रस्य युवसंज्ञा पूजायां ग-
यम् । तत्रभवान् गार्ग्यायणः । पूजेति किम् । गार्ग्यः ॥ यूनश्च कुत्सायां
ति वाच्यम् * ॥ गार्ग्यो जाल्मः । कुत्सेति किम् । गार्ग्यायणः ॥ **एको**
**। ४ । १ । ९३ ॥** गोत्रे एक एवापत्यप्रत्ययः स्यात् । उपगोर्गोत्रापत्यं औप-
गार्ग्यः । नाडायनः ॥ गोत्रे स्वैकोनसंख्यानां प्रत्ययानां परम्परा । यद्वा स्वकृ-
योऽनिष्टोत्पत्तिः प्रसज्यते ॥ १ ॥ अपत्यं पितुरेव स्यात्ततः प्राचामपीति च ।
तद्वान्ये सूत्रमेतत्तयोत्तरम् ॥ २ ॥ पितुरेवापत्यमिति पक्षे हि उपगो-
औपगवादिञ् स्यात् । चतुर्थे स्वजीवज्ज्येष्ठे मृतवंश्ये औपगवेः फक् । इत्थं
परम्परायां मूलाच्छततमे गोत्रे एकोनशतं प्रत्ययाः स्युः । पितामहादीनाम-
पक्षे तु तृतीये वाच्ये उपगोरणा इष्टे सिद्धेऽपि अण्णन्तादिञपि स्यात् ।
गिति फगिञोः परम्परायां शततमे गोत्रेऽष्टनवतेरनिष्टप्रत्ययाः स्युः ।
ार्थमिदं सूत्रम् । एवमुत्तरसूत्रेऽप्यूह्यम् ॥ **गोत्राद्यून्यस्त्रियाम् । ४ । १।**
न्यपत्ये गोत्रप्रत्ययान्तादेवापत्यप्रत्ययः स्यात् । स्त्रियां तु न युवसंज्ञा । गर्गस्य
ार्ग्यायणः । स्त्रियां गोत्रत्वादेक एव प्रत्ययः ॥ **अत इञ् । ४ । १ । ९५ ॥**
ातिपदिकं तस्मात्कृतिकालप्रत्ययान्तादिञ् स्यादपत्येऽर्थे । दाक्षिः ॥ **बाह्वा-**
**। ४ । १ । ९६ ॥** बाहविः औडुलोमिः । आकृतिगणोऽयम् ॥ **सुधातुर-**
**४ । १ । ९७ ॥** वादिञ् । सुधातुरपत्यं सौधातकिः ॥ व्यासवरुडनिषाद-

---

* यूनश्चेति वार्तिके सूत्रपाठे केचित्पठन्ति ।

उपबाहु, उपवाकु, निवाकु, शिवाकु, वटाकु, उपबिन्दु, वृषली, वृकला, चूडा, बलाका,
, छगला, धुवका, ध्रुवका, सुमित्रा, दुर्मित्रा, पुष्करसद्, अनुहरद्, देवशर्मन्, अग्निशर्मन्, भ-
, कुनामन्, सुनामन्, पञ्चन्, सप्तन्, अष्टन्, अमितौजसः सलोपश्च, सुधावन्, उदञ्चु, मात्र,
, मरीचिन्, क्षेमवृद्धिन्, शृङ्खलतोदिन्, खरनादिन्, नगरमर्दिन्, प्राकारमर्दिन्, लोमन्,
, युधिष्ठिर, अर्जुन, साम्ब, गद, प्रद्युम्न, उदङ्क, उदक, संज्ञायाम्, संभूयोऽम्भसोः सलोपश्च ।
। तेन, सात्यकिः, जाङ्घिः, ऐन्द्रशर्मिः, आजधेनविः । इति बाह्वादिः ।

यण्वादन्विषयाणां नेति वक्तव्यम् * ॥ **न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ता-भ्यामैच्** ।७।३।३॥ पदान्ताभ्यां यकारवकाराभ्यां परस्य न वृद्धिः किं तु ताभ्यां पूर्वौ क्रमादैजावागमौ स्तः । नैयायिकः । सौवश्विरित्यादि ॥ **गोत्रे कुञ्जादिभ्यश्च्फञ्** ।४।१।९८॥ **व्रातच्फञोरस्त्रियाम्** ।५।३।११३॥ व्रातच्फञन्ताभ्यां स्वार्थे ञ्यः स्यात् न तु स्त्रियाम् । कौञ्जायन्यः । बहुत्वे तद्राजत्वाल्लुग्वक्ष्यते । कौञ्जायनाः । स्त्रियां कौञ्जायनी । गोत्रत्वेन जातित्वान्ङीष् । अनन्तरापत्ये कौञ्जिः ॥ **नडादिभ्यः फक्** ।४।१।९९॥ गोत्र इत्येव । नाडायनः । चारायणः । अनन्तरे नाडिः ॥ **हरितादिभ्योऽञः** ।४।१।१००॥ इमेऽञन्तेभ्यो यूनि फक् । हारितायनः । इह गोत्राधिकारेऽपि सामर्थ्याद्यूनीत्यवम् । गोत्रादपरो गोत्रप्रत्ययः । विदाद्यन्तर्गणो हरितादिः ॥ **यञिञोश्च** ।४।१।१०१॥ गोत्रे यौ यञिञौ तदन्तात् फक् स्यात् । अनार्षीत्युक्तेरपत्यत्वेनेति यत्नोपेन । गार्ग्यायणः । दाक्षायणः ॥ **शरद्वच्छुनकदर्भाद्भृगुवत्साग्रायणेषु** ।४।१।१०२॥ गोत्रे फक् । अञिञोरपवादः । आद्यौ विदादी । शारद्वतायनो भार्गवश्चेत् । शारद्वतोऽन्यः । शौनकायनो वात्स्यश्चेत् । शौनकोऽन्यः । दार्भायण आग्रायणश्चेत् । दार्भिरन्यः ॥ **द्रोणपर्वतजीवन्तादन्यतरस्याम्** ।४।१।१०३॥ एभ्यो गोत्रे फग् वा । द्रौणायणः । द्रौणिः । पार्वतायनः । पार्वतिः । जैवन्तायनः । जैवन्तिः । अनादिरिह द्रोणः । अश्वत्थाम्न्यनन्तरे तूपचारात् ॥ **अनृष्यानन्तर्ये बिदादिभ्योऽञ्** ।४।१।१०४॥ एभ्योऽञ् गोत्रे । ये त्वत्रानृषयस्तेभ्य आनन्तर्ये । सुते स्वार्थे ष्यञ् । बिदस्य गोत्रापत्यं बैदः । अनन्तरो बैदिः । बाह्वादेराकृतिगणत्वादिञ् ।

---

१ कुञ्ज, ब्रध्न, शङ्ख, भस्मन्, गण, लोमन्, शठ, शाक, शुण्डा, शुभ, विपाश, स्कन्द, स्तम्भ। इति कुञ्जादिः ।

२ नड, चर, बक, मुञ्ज, इतिक, इतिश, उपक, एक, लमक, शलङ्कु शलङ्कं च, सप्तल, वाजप्य, तिक, अग्निशर्मन् वृषगणे, प्राण, नर, सायक, दास, मित्र, द्वीप, पिङ्गर, पिङ्गल, किङ्कर, किङ्कल, कारप, कातर, कातल, काश्य, काव्य, अज, अमुष्य, कृष्णरणौ, ब्राह्मणवासिष्ठे, अमित्र, लिगु, चित्र, कुमार, क्रोष्टु, क्रोष्टं च, लोह, दुर्ग, स्तम्भ, शिंशपा, अग्रतृण, शकट, सुमनस्, सुमत, मिमत, ऋच्, जलन्धर, अध्वर, युगन्धर, हंसक, दण्डिन्, हस्तिन्, पिण्ड, पञ्चाल, चमसिन्, सुकृत्य, स्थिरक, ब्राह्मण, चटक, बदर, अश्वल, खरप, लङ्क, इन्ध, अस्र, कामुक, ब्रह्मदत्त, उदुम्बर, शोण, अलोह, दण्ड । इति नडादिः ।

३ अयं गणः अस्मिन्नेव पृष्ठेऽधःस्थितो विदादिगणान्तर्गतो द्रष्टव्यः ।

४ बिद, उर्व, कश्यप, कुशिक, भरद्वाज, उपमन्यु, किलात, किन्दर्भ, विश्वानर, ऋष्टिषेण, ऋतभाग, हर्यश्व, प्रियक, आपस्तम्ब, कूचवार, शरद्वत, शुनक, धेनु, गोपवन, शिग्रु, बिन्दु, भाजक, भाजन, अश्वतान, श्यामक, श्यामाक, श्यावलि, श्यापर्ण, हरित, किन्दास, वह्यस्क, अर्क, लूष, वध्योग, विष्णुवृद्ध, प्रतिबोध, रथीतर, रथन्तर, गविष्ठिर, निषाद, शबर, अलस मठर, मृडाकु, मृदु, पुनर्भू, पुत्र, दुहितृ, ननान्दृ, परस्त्री, परशु च । इति बिदादिः ।

स्यात् किम् । गाङ्गायनिः । शुभ्रादित्वाड्ढक् । गाङ्गेयः ॥ **अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः** । ४ । १ । ११३ ॥ अवृद्धेभ्यो नदीमानुषीनामभ्योऽण् स्यात् । ढकोऽपवादः । यामुनः । नार्मदः । शिक्षिताया अपत्यं शैक्षितः । अवृद्धाभ्यः किम् । वासवदत्तेयः । नद्यादि किम् । वैनतेयः । तन्नामिकाभ्यः किम् । शोभनाया अपत्यं शौभनेयः ॥ **ऋष्यन्धकवृष्णिकुरुभ्यश्च** । ४ । १ । ११४ ॥ ऋषयो मन्त्रद्रष्टारः । वासिष्ठः । वैश्वामित्रः । अन्धकेभ्यः । श्वाफल्कः । वृष्णिभ्यः । वासुदेवः । आनिरुद्धः । शौनिकिरिति तु बाह्वादित्वादिञ् । कुरुभ्यः । नाकुलः । साहदेवः । इञ एवायमपवादो मध्येऽपवादन्यायात् । अत्रिशब्दात्तु परत्वाड्ढक् । आत्रेयः ॥ **मातुरुत्संख्यासंभद्रपूर्वायाः** । ४ । १ । ११५ ॥ संख्यादिपूर्वस्य मातृशब्दस्योकारोऽन्तादेशः स्यादण्प्रत्ययश्च । द्वैमातुरः । षाण्मातुरः । सांमातुरः । भाद्रमातुरः । आदेशार्थं वचनं प्रत्ययस्तूत्सर्गेण सिद्धः । स्त्रीलिङ्गनिर्देशोऽर्थापेक्षः । तेन धान्यमातुर्न । संख्येति किम् । सौमात्रः । शुभ्रादित्वाद्द्वैमात्रेयः ॥ **कन्यायाः कनीन च** । ४ । १ । ११६ ॥ ढकोऽपवादोऽण् तत्संनियोगेन कनीनादेशश्च । कानीनो व्यासः कर्णश्च । अनूढाया एवापत्यमित्यर्थः ॥ **विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिषु** । ४ । १ । ११७ ॥ अपत्येऽण् । वैकर्णो वात्स्यः । वैकर्णिरन्यः । शौङ्गो भारद्वाजः । शौङ्गिरन्यः । छागल आत्रेयः । छागलिरन्यः । केचित्तु शुङ्गेत्याबन्तं पठन्ति तेषां ढक् प्रत्युदाहरणं शौङ्गेयः ॥ **पीलाया वा** । १ । ४ । ११८ ॥ तन्नामिकाणं बाधित्वा द्व्यचः इति ढकि प्राप्ते पक्षेऽण् विधीयते । पीलाया अपत्यं पैलः । पैलेयः ॥ **ढक् च मण्डूकात्** । ४ । १ । ११९ ॥ चादण् । पक्षे इञ् । माण्डूकेयः माण्डूकः । माण्डूकिः ॥ **स्त्रीभ्यो ढक्** । ४ । १ । १२० ॥ स्त्रीप्रत्ययान्तेभ्यो ढक् स्यात् । वैनतेयः । बाह्वादित्वात्सौमित्रिः । शिवादित्वात्सापत्नः ॥ **द्व्यचः** । ४ । १ । १२१ ॥ द्व्यचः स्त्रीप्रत्ययान्तात् ढक् । तन्नामिकाणोऽपवादः । दात्तेयः । पार्थ इत्यत्र तु तस्येदमित्यण् ॥ **इतश्चानिञः** । ४ । १ । १२२ ॥ इकारान्ताद् द्व्यचोऽपत्ये ढक् स्यात् न त्विञन्तात् । दौलेयः । नैधेयः ॥ **शुभ्रादिभ्यश्च** । ४ । १ । १२३ ॥ ढक् स्यात् । शुभ्र-

---

संधि, मुनि, ककुत्स्थ, कहोड, कोहड, कहूयय, कहय, रोधक, पिञ्जल, खञ्जन, वतण्ड, तृण, क्षीर, हद, जलहद, परिल, पिष्ट, हैहय, गोपिका, कपालिका, जटिलिका, बाधिरिका, मञ्जिष्ठा, खञ्जार, खञ्जाल, रेख, लेख, रिख, आलेखन, विश्रवण, रवण, वर्तनाक्ष, ग्रीवाक्ष, पिटक, ऋक्षाक, नभ ऊर्णनाभ, जरत्कारु, पुरोहितिका, सुरोहिका, आर्यश्वेत, सुपिष्ट, मसुर, कर्ण, मयूरकर्ण, खदूरक, तक्षन्, ऋष्टिषेण, गङ्गा, विपाश, यस्क, लह्य, द्रुघ, अयस्थूण, तृणकर्ण, पर्ण, भलन्दन, विरूपाक्ष, भूमि, इला, सपत्नी, द्व्यचो नद्याः, त्रिवेणी, त्रिवर्णं च । इति शिवादिः ।

१ शुभ्र, विष्ट, पुर, ब्रह्मकृत, शतद्वार, शतावल, शलाकाभ्र, लेखाभ्र, विकास, रोहिणी, रुक्मिणी, धर्मिणी, दिश, शालूक, अजबस्ति, शकन्धि, विमातृ, विधवा, शुक, विश, देवतर, शकुनि, शुक्र, उग्र,

पत्यं शौभ्रेयः ॥ **विकर्णकुषीतकात्काश्यपे । ४ । १ । १२४ ॥** अपत्ये ढक् वैकर्णेयः । कौषीतकेयः । अन्यो वैकर्णिः । कौषीतकिः ॥ **भ्रुवो वुक् च । ४ । १ । १२५ ॥** चाड्ढक् । भ्रौवेयः ॥ **प्रवाहणस्य ढे । ७ । ३ । २८ ॥** प्रवाहणशब्दस्योत्तरपदस्याचामादेरचो वृद्धिः पूर्वपदस्य तु वा ढे परे । प्रवाहणस्यापत्यं प्रावाहणेयः । प्रवाहणेयः ॥ **तत्प्रत्ययस्य च । ७ । ३ । २९ ॥** ढान्तस्य प्रवाहणस्योत्तरपदस्यादेरचो वृद्धिः पूर्वपदस्य तु वा । प्रवाहणेयस्यापत्यं प्रावाहणेयिः । प्रवाहणेयिः । बाह्यतद्धितनिमित्ता वृद्धिरन्तरङ्गाश्रयेण विकल्पेन बाधितुं न शक्यत इति सूत्रारम्भः ॥ **कल्याण्यादीनामिनङ् । ४ । १ । १२६ ॥** एषामिनङादेशः स्यात् ढक् च । काल्याणिनेयः । बान्धकिनेयः ॥ **कुलटाया वा । ४ । १ । १२७ ॥** इनङ्मात्रं विकल्प्यते ढक् तु नित्यः पूर्वेणैव । कौलटिनेयः । कौलटेयः । सती भिक्षुक्यत्र कुलटा । या तु व्यभिचारार्थं कुलान्यटति तस्याः क्षुद्राभ्यो वेति पक्षे ढ्रक् । कौलटेरः ॥ **हृद्भगसिन्ध्वन्ते पूर्वपदस्य च । ७ । ३ । १९ ॥** हृदाद्यन्ते पूर्वोत्तरपदयोरचामादेरचो वृद्धिर्ञिति णिति किति च । सुहृदोऽपत्यं सौहार्दः । सुभगाया अपत्यं सौभागिनेयः । सक्तुप्रधानाः सिन्धवः सक्तुसिन्धवः । तेषु भवः साक्तुसैन्धवः ॥ **चटकाया ऐरक् । ४ । १ । १२८ ॥** चटकस्येति वाच्यम् * ॥ लिङ्गविशिष्टपरिभाषया स्त्रियामपि । चटकस्य चटकाया वा अपत्यं चाटकैरः ॥ स्त्रियामपत्ये लुग्वक्तव्यः ॥ तयोरेव स्त्र्यपत्ये चटका । अजादित्वाट्टाप् ॥ **गोधाया ढ्रक् । ४ । १ । १२९ ॥** गौधेरः । शुभ्रादित्वात्पक्षे ढक् । गौधेयः ॥ **आरगुदीचाम् । ४ । १ । १३० ॥** गौधारः । रकारादेशे आरकोच्चारणमन्यतोऽपि विधानार्थम् । जडस्यापत्यं जाडारः । पण्डस्यापत्यं पाण्डारः ॥ **क्षुद्राभ्यो वा । ४ । १ । १३१ ॥** अङ्गहीनाः शीलहीनाश्च क्षुद्रास्ताभ्यो वा ढ्रक् । पक्षे ढक् । काणेरः । काणेयः । दासेरः । दासेयः ॥ **पितृष्वसुश्छण् । ४ । १ । १३२ ॥** अणोऽपवादः । पैतृष्वस्रीयः ॥ **ढकि लोपः । ४ । १ । १३३ ॥** पितृष्वसुरन्त्यलोपः स्याड्ढकि । अत एव ज्ञापकात् ढक् । पैतृष्वसेयः ॥ **मातृष्वसुश्च । ४ । १ । १३४ ॥** पितृष्वसुर्यदुक्तं तदस्यापि स्यात् । मातृष्वस्रीयः । मातृष्वसेयः ॥ **चतुष्पाद्भ्यो ढञ् । ४ । १ । १३५ ॥ ढे लोपोऽकद्र्वाः । ६ । ४ । १४७ ॥**

---

ल, बन्धकी, सृकण्डु, विश्र, अतिथि, गोदन्त, कुशाम्ब, मकष्टु, शाताहर, इत, पवष्टु, रिक, सुनामन्, लक्षणश्यामयोर्वासिष्ठे, गोधा, कृकलास, अणीव, प्रवाहण, भरत, भरम, मृकण्डु, कर्पूर, इतर, अन्यतर, आलीढ, सुदत्त, सुचक्ष, सुनामन्, कद्रु, तुद, अकशाप, कुमारिका, कुठारिका, किशोरिका, अम्बिका, जिह्माशिन्, परिधि, वायुदत्त, शकल, शलाका, खडूर, कुबेरिका, अशोका, गन्धपिङ्गला, खडोन्मत्ता, अनुदृष्टिन्, जरतिन्, बलीवर्दिन्, विग्र, बीज, जीव, श्वन्, अश्मन्, अश्व । इति शुभ्रादिराकृतिगणः ।

१ कल्याणी, सुभगा, बन्धकी, अनुदृष्टि, अनुसृष्टि, जरती, बली, ज्येष्ठा, कनिष्ठा, मध्यमा, परस्त्री । इति कल्याण्यादिः ।

षद्रूमित्रयोऽवर्णान्तस्य यस्य लोपः स्यात् ई परे । [illegible] । [illegible] प्राग्भागिनिर्देशे ॥ गृष्ट्यादिभ्यश्च[1] । ४ । १ । १३६ ॥ एभ्यो ढञ् स्यात् । अ-ढकोऽपवादः गार्ष्टेयः । मित्रयोरपत्यम् । अत्रापि प्राप्ते ढञ् ॥ केकयमित्रयुप्रलया-नां यादेरियः । ७ । ३ । २ ॥ एषां यकारादेरियादेशः स्यात् ञिति णिति कि-ति च तद्धिते परे । इति इयादेशे प्राप्ते ॥ दाण्डिनायनहास्तिनायनाथर्व-णिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहि-रण्मयानि । ६ । ४ । १७४ ॥ एतानि निपात्यन्ते । इति युलोपः । मैत्रेयः । मैत्रे-यौ ॥ यस्कादिभ्यो गोत्रे[2] । २ । ४ । ६३ ॥ एभ्योऽपत्यप्रत्ययस्य लुक् स्यात् तत्कृते बहुत्वे न तु स्त्रियाम् । मित्रयवः ॥ अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च । २ । ४ । ६५ ॥ एभ्यो गोत्रप्रत्ययस्य लुक् स्यात् तत्कृते बहुत्वे न तु स्त्रियाम् । अत्रयः । भृगवः । कुत्साः । वसिष्ठाः । गोतमाः । अङ्गिरसः ॥ बह्वच इञः प्रा-च्यभरतेषु । २ । ४ । ६६ ॥ बह्वचः परो य इञ् प्राच्यगोत्रे भरतगोत्रे च वर्तमा-नस्तस्य लुक् स्यात् । पन्नागाराः । युधिष्ठिराः ॥ न गोपवनादिभ्यः[3] । २ । ४ । ६७ ॥ एभ्यो गोत्रप्रत्ययस्य लुक् न स्यात् । बिदाद्यन्तर्गणोऽयम् । गौपवनाः । शैग्रवाः ॥ तिककितवादिभ्यो द्वन्द्वे[4] । २ । ४ । ६८ ॥ एभ्यो गोत्रप्रत्ययस्य बहुत्वे लुक् स्यात् द्वन्द्वे । तैकायनश्च कैतवायनश्च । तिकादिभ्यः फिञ् तस्य लुक् । तिककितवाः ॥ उपका-दिभ्योऽन्यतरस्यामद्वन्द्वे[5] । २ । ४ । ६९ ॥ एभ्यो गोत्रप्रत्ययस्य बहुत्वे लुग्वा स्या-द्द्वन्द्वे चाद्वन्द्वे च । औपकायनाश्च लामकायनाश्च नडादिभ्यः फक् तस्य लुक् । उपकल-मकाः । औपकायनलामकायनाः । भ्राष्ट्रककापिष्ठलाः । भ्राष्टकिकापिष्ठलयः । लमकाः

---

१ गृष्टि, हृष्टि, हलि, बलि, विश्रि, कुद्रि, अजबस्ति, मित्रयु । इति गृष्ट्यादिः ।

२ यस्क, लुह्य, द्रुह्य, अयःस्थूण, तृणकर्ण, सदामत्त, कम्बल, हार, बहिर्योग, कर्णाटक, पर्णाढक, पिण्डीजङ्घ, बकसक्थ, विश्रि, अजबस्ति, कुद्रि, मित्रयु, रक्षोमुख, जङ्घारथ, उत्कास, कटुक, मन्थक, पुष्करसद्, विषपुट, उपरिमेखल, क्रोष्टुमान, क्रोष्टुपाद, क्रोष्टुमाय, शीर्षमाय, खरप, पदक, वर्मक, भलन्दन, भडिल, भण्डिल, भडित, भण्डित । इति यस्कादिः ।

३ अयं गणः दशाधिकशततमे ११० पृष्ठे द्रष्टव्यः । [illegible] च हरितादिभ्यः प्रागेव ।

४ तिककितवाः, वङ्खरभण्डीरथाः, उपकलमकाः, पफकनरकाः, बकनखगुदपरिणद्धाः, उब्जककुभाः, लङ्कशान्तमुखाः, उत्तरशलङ्कटाः, कृष्णाजिनकृष्णसुन्दराः, अग्निवेशदाशेरकाः । इति तिककितवादिः ।

५ उपक, लमक, भ्राष्ट्रक, कपिष्ठल, कृष्णाजिन, कृष्णसुन्दर, चूडारक, आडारक, गडुक, उदङ्क, सुधायुक, अबन्धक, पिङ्गलक, पिष्ट, सुपिष्ट, मयूरकर्ण, खरीजङ्घ, शलाथल, पतञ्जल, पदञ्जल, कठेरणि, कुषीतक, काशकृत्स्न, निदाघ, कलशीकण्ठ, दामकण्ठ, कृष्णपिङ्गल, कर्णक, पर्णक, जटिलक, बधिरक, जन्तुक, अनुलोम, अर्धपिङ्गलक, प्रतिलोम, अप्रतिलोम, अरजस्क, प्रेतान, अनभिहित, कमक, वटारक, लेखाभ्र, कमन्दक, पिञ्जूलक, वर्णक, मसूरकर्ण, मदाघ, कवन्तक, कमन्तक, कदामत्त, दामकण्ठ । इति उपकादिः ।

